# वाकोवाक्यम्
(अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका)

# VĀKOVĀKYAṀ
**(An International Sanskrit Research Journal)**
**ISSN : 0975-4555 VAKOVAKYAM**
**UGC Journal No. 40863**

**Publisher**
Mrs. Sonamati Devi Pandey
VAKOVAKYAM SANSKRIT SANSTHANA
VARANASI - 221010 (INDIA)

**Address**
Flat # 3, Priya Apartment
Kamachha, Varanasi-221010, INDIA

**Email**
vakovakyam@yahoo.co.in
viveka_pandey@yahoo.com
vivekapandey@hotmail.com

**website**
www.vakovakyam.com

**Individual and institutional subscription information :**

| **Individual** | | (India) | (outside India) |
|---|---|---|---|
| Price : | One Article | ₹ 100.00 | N.A. |
| | One Issue | ₹ 500.00 | US $ 15 |
| | One Year | ₹ 1000.00 | US $ 30 |
| | Five Year | ₹ 4000.00 | US $ 150 |
| | Life Membership | ₹ 25000.00* | N.A. |
| **Institutional** | | | |
| | Five year | ₹ 5000.00 | |
| | Life Membership | ₹ 50000.00* | N.A. |

* Decision of allotment will be made by internal committee of Vakovakyam.

**Printer**
Dee Gee Printers
B. 22/398, Khojwan Bazar, Varanasi-221010,

| Publication Year | : | 2017 |
|---|---|---|
| Volume | : | I&II |
| Issue | : | X-XI |

**Mechanical Data**

| Size | : | 7" x 9.5" |
|---|---|---|
| Print Area | : | 6" x 8" |


**Disclaimer** : The Editorial Board as well as the Publisher does not necessarily subscribe to the views expressed by the authors in their articles. Such views are at the sole responsibility of the author(s).

**सम्पादकीयम्**

**सहृदं साम्मनस्यमविद्वेषं कृणोमि वः।**
**अन्यो अन्यमभि हर्यत वत्सं जातमिवाध्न्या।।**

*(अथर्ववेद ३/३०)*

मान्या:!

'वाकोवाक्यम्' इति षाण्मासिकसंस्कृतशोधपत्रिकाया: दशमोऽङ्क: (अक्टूबर २०१६ - सितम्बर २०१७) समेषां विपश्चितां करकमलयोस्सम्प्रति समुपायनीक्रियते।

अस्या: सप्तमोऽप्यङ्क: रचनाप्रकारे तन्निवेशक्रमे च पूर्वाङ्कमेवानुहरति। अत्रापि शोधपूर्णानिबन्धा:, एका विशिष्टा काव्यरचना, सद्य: प्रकाशितानां ग्रन्थानां समीक्षणञ्चेति विविधा विषया: यथायथं सन्निवेश्यन्ते। एष सप्तमोऽप्यङ्क: अनुसन्धित्सूनां शोधदिग्दर्शनाय विदुषां तोषाय स्यादित्याशास्यते।

सकला: प्रजा अध्न्या गाव इव जातं वत्सं परस्परमाभिमुख्येन कामयन्तामिति समीहते भगवती आथर्वणी श्रुतिरपि। प्रोत्साहनपराभि: स्वरचनाभि: स्वप्रशंसावाग्भिश्च न: प्रयत्नान् सफलयतां मनीषिणां भूयो भूय आभारप्रदर्शनपूर्वकं स्वीयामाधमर्णतां स्वीकुर्वाणा निवेदयामहे यदस्माभि: कृता: स्खलितयोऽपि यथासमयं विज्ञापनीया:। महीयसां प्रबोधनमहिम्नैव हि विकृतयोऽपनेतुं शक्यन्ते। शोधपूर्णानां निबन्धानां सुललितकाव्यकृतीनाञ्च सङ्कलने काठिन्यातिशयं प्रकाशनविधौ महदसाहय्यञ्चानुभवन्ती (सारस्वतमार्थिकञ्च) चापीयं पत्रिका शास्त्रेषु कृतधियां सुधियां समाशिष एव पाथेय मनुते।

पुनश्च पत्रिकायां प्रकाशनार्थं रचनार्थमस्माकं प्रार्थना: श्रुत्वा स्वकीयासौविध्यमगणय्य विद्यैकपक्ष-पातिभिर्विद्वद्भि: स्वीयलेखनीनिष्यन्दामन्दमरन्दप्रवाहा: कृती: प्रदाय य: खलु अनाग्रहोऽनुग्रहो व्यधायि तदर्थं कार्त्तज्ञ्यप्रकाशमाधमर्ण्यं च बिभर्मि। अग्रिमेष्वप्यङ्केषु गुणग्राहिणो गीर्वाणगवीगौरववशंवदा: सारस्वता जना सानुग्रहं सारस्वतं साहाय्यं विधास्यतीति भृशमाशासे।

एतत्प्रकाशनाय शोधलेखप्रदानाद्यावश्यकविविधोपकारं कृतवतां पत्रिकाप्रकाशनसमितिसदस्यानां समेषां विदुषां कृते हार्दिकान् धन्यवादान् ज्ञापयाम:।यथासम्भवमशुद्धय: माभूवन्निति प्रयतितमस्माभिस्तथापि यदि क्वचित् त्रुटय: स्युस्तर्हि ता: परिमार्जनीया: सहृदयै: सुधीभि:।

अन्ते च सर्वकारणभूतं साम्बं शिवं च प्रणम्य विस्तराद् विरमति।

विनयावनत:
**(डॉ. विवेकपाण्डेय:)**
**प्रधान-सम्पादक:**

प्रकाशक: - वाकोवाक्यम् संस्कृत-संस्थानम्, वाराणसी.
पत्राचारसङ्केत: - फ्लैट नं. ३, प्रिया अपार्टमेण्ट्स, कमच्छा, वाराणसी-२२१०१० (भारत).

**वाकोवाक्यम्**
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

**VĀKOVĀKYAṀ**
**INTERNATIONAL SANSKRIT RESEARCH JOURNAL**

## निवेदनम्

***मान्याः विद्वान्सः!***

भवादृशानां शास्त्रानुरागिणां विदुषां सहकारेण संस्कृतस्य प्रचाराय प्रसाराय च २००७ तमवर्षस्य सितम्बरमासतः वाराणसीतः इयं सर्वाङ्गसौष्ठवसम्पन्ना 'वाकोवाक्यम्' इति षाण्मासिकी अन्ताराष्ट्रियसंस्कृत-शोध-पत्रिका प्रकाशिता भवति। अत्र यत्किमपि परिवर्तनं परिवर्धनं संशोधनं वाऽपेक्षितमस्ति पत्रिकाशोभावृद्धयै, तन्निःसङ्कोचं सूचनीयम्।

अथ च, अस्यां पत्रिकायां तत्रभवन्तो भवन्तः श्रीमन्तः स्वरचितान् पाण्डित्यमहितान् शास्त्रीयशोधनिबन्धान्/नवकाव्यं/ग्रन्थानां समीक्षा यथासमयं प्रकाशनार्थं सम्प्रेष्याऽस्माननुगृह्णीयुरिति।

## पत्रिकायाः नियमाः

येऽपि विद्वत्तल्लजाः स्वकीयाभिः कृतिभिः 'वाकोवाक्यम्' इति शोधपत्रिकां संवर्धयन्ति, तेषामस्य कुशलकर्मणः कृतज्ञतां सश्रद्धं स्वीकुर्मः। परन्तु ते सर्वे एव लेखका विद्वांसः सविनयं प्रार्थ्यन्ते—

* इयं षाण्मासिकी शोध-पत्रिका संस्कृतेन फाल्गुन-भाद्रमासयोः (मार्च-सितम्बर) प्रकाश्यते। वर्षारम्भः फाल्गुनात् मन्यते।
* विमर्शात्मका अनुसन्धानात्मकाश्च शास्त्रीया अप्रकाशितपूर्वा उच्चस्तरीया गभीराश्च मौलिकशोधनिबन्धाः प्रकाशनाय गृह्यन्ते। पत्रिकायां शोधपत्रप्रकाशनार्थं समकक्षसमीक्षापद्धतेः (peer review method) अनुसरणं क्रियते।
* आकाशवाण्याम् अन्यासु वा पत्रिकासु प्रकाशिताः निबन्धा कविताश्चादयो वा अस्यां पत्रिकायां सर्वथैव प्रकाशनानर्हाः। एवमेव अस्यां पत्रिकायां प्रकाशितानां सामग्रीणाम् अन्यत्र प्रकाशनार्थं प्रेषणं न विधिसम्मतम्।
* नाटक-चरित्रवर्णनव्यङ्ग्यहास्यसम्बद्धा नव्या रचना अत्र स्थानं न लभन्ते।
* प्रकाशनाय प्रेषिताः रचनाः शुद्धा एकस्मिन् पत्रपृष्ठे APS Stardust Font 12 Points टङ्किताः स्युः, रचनान्ते रचयितुः आवाससङ्केतः पदनिर्देशश्च उल्लिखितौ स्याताम्।
* शोधपत्रस्य प्रतिद्वयं (hard copy with C.D.) डिमाण्डड्राफ्टसहितं (रु. ५५०.०० वार्षिकीसदस्यता) प्रेषणीयम्।
* ग्रन्थानां समीक्षार्थं ग्रन्थस्य प्रतिद्वयं सम्पादकं प्रति प्रेषणीयम्।
* लेखानां प्रकाशनस्य सम्पादनस्य च सर्वाधिकारः सम्पादकाधीनः। किन्तु लेखेषु अभिव्यक्तानां विचाराणामुत्तरदायित्वं लेखका एव निर्वक्ष्यन्ति।

**पत्राचारसङ्केतः**
**वाकोवाक्यम्**
(अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका)
फ्लैट नं० ३, प्रिया अपार्टमेण्ट्स,
कमच्छा, वाराणसी-२२१०१०,
उ.प्र. (भारत).

**Visit us at :**
**www.vakovakyam.com**
**www.vakovakyam.wordpress.com**
**Email**
vakovakyam@yahoo.co.in
viveka_pandey@yahoo.com
Telephone : +91-542-2400482
Tele-fax : +91-542-2400482.

## Contents/ विषय-सूची

**काव्यम्**



**ग्रन्थ-समीक्षा**



◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAṀ
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 7-21

# शाब्दिकदृष्ट्या औचित्यविचारचर्चायाः समीक्षा

**प्रो. भगवत्शरणशुक्लः***

अखिलोऽपि शब्दव्यवहारो न हि शब्दप्रयोगं विना क्वचिदपि भवितुमर्हति। न केवलं मानवानां तिर्यञ्चोऽपि शब्दप्रयोगेणैव परस्परं व्यवहरन्ति। अत एव प्रायः समेषामपि प्राणिनां यथा कथञ्चित् शब्दप्रयोगा भवन्त्येव। कदाचित् तिरश्चां भाषाज्ञानमपि कलात्वेन स्वीकृतमासीत्। यतो हि व्यवहारजगति शब्दप्रयोगेणैव सकलोऽपि व्यापारः परस्परं जायते। अत एव भर्तृहरिणोक्तम्—

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।**[१]

अखिलमपि साहित्यं शब्दप्रयोगभूमिर्वर्त्तते। कथं सरसाः सालङ्काराः सगुणा औचित्यपूर्णाः शब्दाः प्रयोक्तव्या इत्यस्य सकलोऽपि बोधः साहित्याध्ययनेनैव सम्भवोऽस्ति। अत एव महाभाष्यकारोऽङ्गीकरोति- 'लक्ष्यलक्षणे व्याकरणमि'ति कात्यायनवाक्यं विशदयन् "लक्ष्यं च लक्षणं चैतत् समुदितं व्याकरणं भवति। किं पुनर्लक्ष्यं, किं च लक्षणम्? शब्दो लक्ष्यः, सूत्रं लक्षणम्" इति।[२]

महाभाष्यग्रन्थेऽस्मिन् शब्दो नाम समुचितशब्दप्रयोगभूमिः। सा च काव्यादिष्वेव वर्त्तते। अत एव वैदिकं, पौराणिकं, लौकिकं, सर्वमपि साहित्यजातं काव्यशब्देनापि व्यवह्रियते तत् सर्वमपि लक्ष्यत्वेन व्याकरणमेवेति सूच्यते कात्यायनपतञ्जलिभ्याम्। अत एवात्मानं प्रशंसयन्तः समेऽपि साहित्यिका उद्घोषयन्ति "प्रथमे हि विद्वांसो वैयाकरणा व्याकरणमूलत्वात् सर्वविद्यानाम्।"[३] बुधैः = वैयाकरणैः[४] लक्षणं च पाणिनीयादीनि व्याकरणसूत्राणि, इत्थं लक्ष्यलक्षणे व्याकरणमिति सिद्धान्तो विद्यते।

शब्दप्रयोगाणामपि विविधा नियमा विज्ञैः संस्थापिताः सन्ति। कस्य शब्दस्य प्रयोगोऽर्थविशेषस्य सम्पादनाय कुशलतया कुत्र कर्त्तव्यः? कथं समुचितशब्दप्रयोगः सहृदयहृदयावर्जकश्चमत्कारकारी च भवति? इत्येवं विचारायैव साहित्यशास्त्राणां निर्मितिः सञ्जाता। तेषु केचन आचार्यभरतादिविरचिताः समस्तसाहित्यशास्त्रीय-नियमावबोधका नाट्यशास्त्रादिग्रन्थाः, केचन च कामप्येकविधामादायानेकविधां वादाय प्रवर्त्तिताः सन्ति। प्रायः साहित्य-शास्त्रस्य रसालङ्कारगुणदोषविवेचका ग्रन्था अधिका वर्त्तन्ते।

आचार्यक्षेमेन्द्रो महाकविः साहित्यादिविविधविद्याप्रवीणः आचार्यभरतप्रभृतिपरम्परायां विद्यमानान् काव्योत्कर्षबोधकनियमानादाय काव्येषु शब्दप्रयोगस्यौचित्यस्य विचाराय स्वतन्त्रम् 'औचित्यविचारचर्चा' इत्याख्यं ग्रन्थं रचयामास। ग्रन्थेऽस्मिन् औचित्यविचारावसरे जिज्ञासोदेति किं नाम औचित्यम्? आचार्यक्षेमेन्द्रोऽस्य लक्षणं प्रस्तौति—

* व्याकरणविभागः, संस्कृतविद्याधर्मविज्ञानसङ्कायः, काशीहिन्दूविश्वविद्यालयो, वाराणसी.

**उचितं प्राहुराचार्याः सदृशं किल यस्य यत्।**
**उचितस्य च यो भावस्तदौचित्यं प्रचक्षते।।**[५]

अर्थात् यत्र प्रसङ्गानुरूपं शब्दप्रयोग इत्थं कश्चित् चमत्कारजनकः सहृदयहृदयावर्जकः स्यात् येनालौकिकानन्दानुभूतिर्भवेत् स एव शब्दप्रयोग उचितः, तस्य भाव औचित्यं कथ्यते। उचितस्य भाव औचित्यमिति विग्रहे ''गुणवचनब्राह्मणादिभ्यः कर्मणि च''।।५/१/१२४।। इति सूत्रेण आकृतिगणत्वेनोचितशब्दमादाय ततः ष्यञ्प्रत्यये अनुबन्धलोपे आदिवृद्धौ सत्यां औचित य इत्यत्र भसंज्ञायां जातायामुचितघटकतकारस्थाकारस्य लोपे वर्णसम्मेलने स्वादिकार्ये च सति शब्दोऽयं निष्पद्यते। आचार्यक्षेमेन्द्रः औचित्यं काव्यस्य जीवितम् अर्थात् प्राणाः इति मन्यते—

**औचित्यस्य चमत्कारकारिणश्चारुचर्वणे।**
**रसजीवितभूतस्य विचारं कुरुतेऽधुना।।**[६]

इदमौचित्यञ्च आचार्यक्षेमेन्द्रमते काव्याधाररसस्य प्राणभूतमस्ति। औचित्यस्य च मुख्याधारश्चमत्कृतिरेव अनेन काव्यगतचारुचर्वणाश्रयालौकिकचमत्कारकारिधर्मविशेषशलित्वमौचित्यमिति लक्षणमौचित्यस्य भवितुमर्हति।

ध्वन्यालोककार आनन्दवर्धनः सङ्घटनायाः नियमने वक्तृवाच्ययोरौचित्यं हेतुं मन्यते- ''**तन्नियमे हेतुरौचित्यं वक्तृवाच्ययोः**।''[७] तत्र वक्ता कविः कविनिबद्धो वा। कविनिबद्धश्चापि रसभावरहितो रसभावसमन्वितो, रसोऽपि कथानायकाश्रयस्तद्विपक्षाश्रयो वा। कथानायकश्च धीरोदात्तादिभेदभिन्नः पूर्वस्तदनन्तरो वेति विकल्पः। वाच्यं च ध्वन्यात्मकरसाङ्गं रसभासाङ्गं वा, अभिनेयार्थमनभिनेयार्थं वा उत्तमप्रकृत्याश्रयं तदितराश्रयं वेति बहुप्रकारम्।''[८]

अनेन ज्ञायते यत् काव्यगतौचित्यविचारे कवितात्पर्यमपि विचारणीयं भवति। आचार्य कुन्तकश्च येन स्पष्टवर्णनप्रकारेण स्वभावस्य महत्त्वं पोष्यते तदेवौचित्यं कथ्यते, यस्य बीजं भवति यथानुरूपं कथनम्—

**आञ्जसेन स्वभावस्य महत्त्वं येन पोष्यते।**
**प्रकारेण तदौचित्यमुचिताख्यानजीवितम्।।**[९]

इत्थं त्रयाणामपि वरिष्ठाचार्याणां मतविवेचनेन ज्ञायते यत् स्पष्टवर्णनप्रकारेण स्वभावमहत्त्वपोषकत्वे सति वक्तृवाच्यवृत्तितात्पर्यज्ञानपूर्वकचारुचर्वणाश्रयालौकिकचमत्कारकारिधर्मविशेषशालित्वमौचित्यमिति लक्षणमौचित्यस्य भवितुमर्हति न केवलं पूर्वोक्तं लक्षणम्, अन्यथा आनन्दवर्धनकुन्तकवचनयोर्व्यर्थतापत्तिः स्यात्।

प्रायः समेऽप्याचार्याः औचित्यविषये यथाप्रसङ्गं विचारं विहितवन्तः। किन्तु औचित्यमेव विवेच्यविषयं विधाय आचार्यक्षेमेन्द्र एव 'औचित्यविचारचर्चा' इति ग्रन्थरूपं विशिष्टं प्रयत्नं कृतवानिति विशेषः।

ग्रन्थेऽस्मिन् आचार्यक्षेमेन्द्रः सप्तविंशतिः विषयाः औचित्यविचाराय प्रामुख्येन भवन्तीति विचारयति—

**पदे वाक्ये प्रबन्धार्थे गुणेऽलङ्करणे रसे।**
**क्रियायां कारके लिङ्गे वचने च विशेषणे।।**
**उपसर्गे निपाते च काले देशे कुले व्रते।**
**तत्त्वे सत्त्वेऽप्यभिप्राये स्वभावे सारसङ्ग्रहे।।**
**प्रतिभायामवस्थायां विचारे नाम्न्यथाशिषि।**
**काव्यस्याङ्गेषु च प्राहुरौचित्यं व्यापि जीवितम्।।**[१०]

अर्थात् काव्यस्य मर्मस्थानिकेषु एतेषु औचित्यविषये विचारः करणीयः- (१) पदम्, (२) वाक्यम्, (३) प्रबन्धार्थः, (४) गुणः, (५) रसः, (६) अलङ्कारः, (७) क्रिया, (८) कारकम्, (९) लिङ्गम्, (१०) वचनम्, (११) विशेषणम्, (१२) उपसर्गः, (१३) निपातः, (१४) कालः, (१५) देशः, (१६) कुलम्, (१७) व्रतम्, (१८) तत्त्वम्, (१९) सत्त्वम्, (२०) अभिप्रायः, (२१) स्वभावः, (२२) सारसङ्ग्रहः, (२३) प्रतिभा, (२४) अवस्था, (२५) विचारः, (२६) नाम, (२७) आशीर्वादः। इति।

अत्र औचित्यविचाराय आचार्यक्षेमेन्द्रेण ये ये विन्दवो गृहीताः तेषु पदवाक्यक्रियाकारकलिङ्गवचनविशेषणोपसर्गनिपातकालाः इति दश बिन्दवो व्याकरणशास्त्रमादाय वर्त्तन्ते। यद्यपि अभिप्रायस्वभावप्रतिभाविचारनामाख्या अपि विन्दवः कथञ्चिद् व्याकरणविषया भवितुमर्हन्ति तथापि तत्र साक्षाद् व्याकरणस्य योगदानं नास्ति। अत एतेषु दशसु विन्दुषु यो विचार औचित्यदृष्ट्या क्षेमेन्द्रेणात्र विहितस्तस्य समीक्षात्र विधीयते।

आचार्यक्षेमेन्द्रः पदानामौचित्यविचारे औचित्यस्यानौचित्यस्य चोदाहरणनि प्रदर्श्य सम्यग् व्याख्याति। तेन स विषयः औचित्यदृष्ट्या सम्यग् विवेचितो भवति। उदाहरणेषु औचित्यस्य अनौचित्यस्य च विषये स्वकीयानि अन्येषां कवीनाञ्च पद्यानि उदाहरति। विवेचनदृष्ट्या आचार्यदृष्टिर्निष्पक्षा सूक्ष्मा च विद्यते। अत एवानौचित्यविषये स्वकीयपद्यान्यप्युदाहरति।

**पदौचित्यम् -** पदं नाम सुबन्तं तिङन्तं च। तद्धितभिन्नविभक्तिसंज्ञकप्रत्ययाव्यवहितपूर्वत्वविशिष्टप्रकृतिसंवलित समुदायत्वं पदत्वमित्यपि लक्षणं पदस्य वक्तुं शक्यते। ''प्राग् दिशो विभक्तिः''।।५/३/१।। इत्यधिकारस्थसूत्रविहित-प्रत्ययानामपि विभक्तिसंज्ञायाः सत्त्वात् तद् वारणाय लक्षणे तद्धितभिन्नेति विशेषणं दत्तम्।

आचार्यक्षेमेन्द्रः पदौचित्यस्य महत्त्वं लक्षणं दर्शयति—

**तिलकं बिभ्रती सुक्तिर्भात्येकमुचितं पदम्।**
**चन्द्राननेव कस्तूरीकृतं श्यामेव चन्दनम्।।**[११]

अर्थादेकमेवोचितं पदं काव्यं प्रयुक्तं तिलकमिव भावो सौन्दर्यातिशयमावहति।

यथौचित्यस्योदाहरणम्—

**मग्नानि द्विषतां कुलानि समरे त्वत्खड्गधाराकुले,**
**नाथास्मिन्निति वन्दिवाचि बहुशो देवश्रुतायां पुरा।**
**मुग्धा गुर्जरभूमिपालमहिषी प्रत्याशया पाथसः,**
**कान्तारे चकिता विमुञ्चति मुहुः पत्युः कृपाणे दृशौ।।**

अर्थात् हे देव! त्वत्खड्गधाराकुले समरेऽस्मिन् हे नाथ! द्विषतां कुलानि मग्नानि, इति बहुशः पुरा रुतायां वन्दि वाचि मुग्धा (सरलस्वभावा) गुर्जरभूमिपालमहिषी कान्तारे (वने) पाथसः (जलस्य) प्रत्याशया चकिता सतीपत्युः कृपाणे दृशौ (नेत्रे) विमुञ्चति। पद्येऽस्मिन् अर्थौचित्येन चमत्कारोत्पादकं 'मुग्धां' इति पदं सहृदयानाह्लादयति। पद्यमिदं पदगतौचित्यस्य कवेः परिमलस्य विद्यते। पदगतानौचित्यस्योदाहरणं धर्मकीर्तेः पद्यमित्थमस्ति—

**लावण्यद्रविणव्ययो न गणितः क्लेशो महान् स्वीकृतः,**
**स्वच्छन्दस्य सुखं जनस्य वसतश्चिन्ताज्वरो निर्मितः।**

**एषापि स्वयमेव तुल्यरमणाभावाद् वराकी हता,**
**कोऽर्थश्चेतसि वेधसा विनिहतस्तन्व्यास्तनुं तन्वता।।**

पद्येऽस्मिन् 'तन्व्याः' न हि किञ्चिदर्थौचित्यचमत्कारमावहति। अत्र तन्व्याः स्थाने सुन्दर्याः इति पदमौचित्यपूर्णं स्यात् इति ग्रन्थकारः प्रतिपादितवान्।।[१२]

यद्यप्यत्र तन्वीशब्दः युवतीशरीरगतसौन्दर्यबोधकतत्त्वेषु प्रयुज्यते तेन 'तन्व्याः' शरीरगतस्थौल्याभावात् सुन्दर्याः इति तात्पर्यं कथमपि ग्रहीतुं शक्यते तेनात्र पदगतौचित्यस्य अभावो न भवितुमर्हति, तथापि सौन्दर्ये समविभक्ताङ्गत्वमेव गण्यते। शरीरगततनुत्वं तु वियोगजन्यदुःखदुःखिते एवं रमणीजने प्रयुक्तं भवति। अतस्तत्रैव प्रसङ्गे प्रयुक्तं 'तन्व्याः' इति पदं सहृदयहृदयावर्जकं भावेन्नत्वत्र।

**वाक्यगतौचित्यम्–**

**औचित्यरचितं वाक्यं सततं सम्मतं सताम्।**
**त्यागोदग्रमिवैश्वर्यं शीलोज्वलमिव श्रुतम्।।**[१३]

अर्थात् सज्जनाः औचित्ययुक्तमेव वाक्यमङ्गीकुर्वन्ति। यथा दानादिना ऐश्वर्यं, शीलेन सत्स्वभावेन च शास्त्रज्ञानं शोभते तथैव औचित्यपूर्णवाक्येन काव्यं शोभते।

वाक्यं नाम कारकान्वितक्रियावाचकं सुबन्तचयतिङन्तचयसुबन्ततिङन्तचयान्यतमम्। ''सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता'' इति अमरकोषग्रन्थेनाङ्गीक्रियते। काव्येषु तावत् पद्यात्मकं गद्यात्मकं चोभयं वाक्यं प्रयुक्तं दृश्यते। आचार्यश्चात्र वाक्यगतौचित्यस्योदाहरणं विनयवल्लीस्थं स्वकीयं प्रस्तौति—

**देवो दयावान् विजयो जितात्मा, यमौ मनः संयममाननीयौ।**
**इति ब्रुवाणः स्वभुजं प्रमार्ष्टि यः कीचकाकालककालदण्डम्।।**
**धीरः स किर्मीरजटासुरारिः कुबेरशौर्यप्रशमोपदेष्टा।**
**दृष्टो हिडिम्बादयितः कुरूपां पर्यन्तरेखागणनाकृतान्तः।।**

पद्येऽस्मिन् यः कीचकाकालिककालदण्डं स्वभुजं प्रमार्ष्टि धीरः सः किर्मीर (चित्र विचित्र) जटासुरारिः कुबेरशौर्यप्रशमोपदेष्टा हिडिम्बादयिताः इत्यादिपदैरुद्बुद्धरौद्ररसोचितो वाक्यार्थः सजीव इव प्रतिभाति। अर्थात् कीचिकाकालकाकालदण्डम्प्रभृतिपरैर्युक्तं वाक्यं सम्यग् रौद्ररसं पुष्णाति। तेन वाक्यगतौचित्यस्योदाहरणमिदं सम्यगस्ति।

अत्रैवानौचित्यस्योदाहरणम्—

**नाले शौर्यमहोत्पलस्य विपुले सेतौ समिद्वारिधेः,**
**शश्वत्खड्गभुजङ्गचन्दनतरौ क्रीडोपधाये श्रियः।**
**आलाने जयकुञ्जरस्य सुदृशां कन्दर्पदर्पे परं,**
**श्रीदुर्योधनदोष्णि विक्रमपरे लीनं जगन्नन्दतु।।**

पद्येऽस्मिन् दुर्योधनबाह्वोः यद्वर्णनं तत्रातिशयेन शत्रवे कर्कशसोत्कर्षसुभटभुजस्तम्भस्य वर्णने कुवलयनालतुलनाधिरोपेण वाक्यार्थः सोपहासतयेव निबद्धः परिज्ञायते। यद्यप्यत्र वीररसस्य वर्णनं तथापि 'नालेशौर्यमहोत्सवलस्य' इत्यादिपदयोजनया वाक्यार्थे वीररसस्यापायपोषकत्वाद् उपहास्यतां याति। अर्थात् रसापकर्षकत्त्वात् वाक्यगतानौचित्यमेव पद्येऽस्मिन् विद्यते। यद्यपि यच्छब्दचित्रं कविनात्र रचितं तत्र 'महोत्पलस्य

नाले' इत्यादिपदानि औचित्यपूर्णानि सन्ति तथापि रसापकर्षकत्वात् तेषां दोषाधायकत्वमायात्येवेति बोध्यम्।

पदवाक्यानन्तरं वाक्येषु रसालङ्काराणामुपस्थितिर्भवति। अतो रसालङ्काराणामुपस्थितिर्भवति। अतो रसालङ्काराणामौचित्यमाचार्येण प्रदर्शितम्। पश्चादाचार्यक्षेमेन्द्रः 'सर्वं वाक्यं क्रियोपरि समाप्यते' इति नियमस्य जागरूकत्वात्, अथ च "आख्यातं साव्ययं सकारकं सकारकविशेषणं वाक्यसंज्ञं भवतीति" कात्यायनवार्त्तिकरीत्या[१४] वाक्यलक्षणस्य सत्त्वात् वाक्येषु क्रियापदस्य प्राधान्यं भवतीति पूर्वं क्रियौचित्यमाचार्यो दर्शयति।

**क्रियौचित्यम्–** **सगुणत्वं सुवृत्तत्वं साधुता च विराजते।**
**काव्यस्य सुजनस्येन यद्यौचित्यवती क्रिया।।**[१५]

अर्थात् काव्ये तदैव सगुणत्वं सुछन्दस्त्वं साधुत्वं सुजनस्येव विराजते यदा तत्रौचित्यवती क्रियाप्रयुक्ता भवति। आचार्यक्षेमेन्द्रः क्रियौचित्यस्योदाहरणं प्रस्तौति—

**यः प्रख्यातजवः सदा स्थितिविधौ सप्ताब्धिसन्ध्यार्चने,**
**दोर्दर्पेण निनाय दुन्दुभिवपुर्यः कालकः कालताम्।**
**यः पातालमसृङ्मयं प्रविदधे निष्पिष्य मायाविनं,**
**सूग्रीवाग्र्यविभूतिलुण्ठनपटुर्वाली स किं स्मर्यते।।**

नीलललतायां विद्यमानं स्वकीयं पद्यमिदं प्रस्तुतवान् आचार्यक्षेमेन्द्रः। अत्र 'स्मर्यते' इति क्रियापदेन शुकसारणाभ्यां रावणस्य कुनीतिपरिपालनस्य विरामाय हितोपदेशेन भवान् वसनकोणनियमितदेहने बालेः कक्षायां निक्षिप्त आसीत् इति ध्वनयति। अतः चमत्कारकरित्वात् औचित्यपूर्णमत्र 'स्मर्यते' इति क्रियापदं वर्त्तते।

अथ क्रियापदानौचित्यस्योदाहरणं प्रस्तौति—

**स्वर्गमपारिजातकौस्तुभलक्ष्मीभ्यां विरहितं मधुमथनस्योरः।**
**स्मराम्यमृतपुरतोऽप्यबालचन्द्रं हरजटाप्राग्भारम्।।**

अर्थात् अमृतार्थं क्षीरसमुन्द्रमन्थनात् पूर्वमपि पारिजातकुसुमरहितं स्वर्गं कौस्तुभलक्ष्मीभ्यां शून्यं विष्योः वक्षःस्थलं बालचन्द्ररहितं हरजटाजूटग्रन्थाग्रभागं स्मरामि। प्रसङ्गोऽयं समुद्रतटे विद्यमानानां सम्दतरणोद्यमे स्वपराक्रमदर्शयितुं समुद्यतानां कपिभल्लूकानां वर्त्तते। तत्र जाम्बवान् स्वजरावस्थां दर्शयनुर वाक्यं वदति। अत्र स्वर्गमपारिजातं कौस्तुभलक्ष्मीभ्यां विरहितं मधुमथनस्योरः स्मरामि इत्येवं क्रियापदं पसङ्गाद् भिन्न समये सत्त्वात् स्वकीयमौचित्यं नावहति ग्रन्थकार इत्थं प्रतिपादयति।

अत्रेदं विचारणीयमस्ति। यतोहि समेऽपि तत्र विद्यमानाः कपयो भल्लूकाश्च स्वकीयं सामर्थ्यमेव प्रकटयन्ति। कस्यचित् सामर्थ्यमधिकं कस्यचिन्न्यूनं भवति। तेषु केचन स्वस्मिन् कार्यसाधनसामर्थ्याभावमनुभूय न प्रकटयन्ति। किन्तु जाम्बवान् तेषु प्रमुखो वरिष्ठश्च चेत् स स्वकीयं सामर्थ्यमसामर्थ्यं वा अकटयित्वा मौनः स्यात् तर्हि कार्यसम्पादनेऽनुत्साह एव द्योतितः स्यात्। समुन्द्रमन्थनात् पूर्वएवोत्पन्नो वृद्धावस्थायाः सत्त्वात् नाहं समुद्रं लङ्घयितुं समर्थः इत्येव सूचयितुमुक्तवाक्ये 'स्मरामि' इति क्रियापदं कविः प्रयुङ्क्ते। अतः प्रसङ्गानुसारमर्थविशेषस्य द्योतनात् तत्र क्रियापदमौचित्यपूर्णमेवास्ति नत्वनौचित्यपूर्णमिति विचारणीयम्। अत एव तस्मिन्नेव प्रसङ्गे वाल्मीकि रामायणेऽपि जाम्बवतो वचनं विद्यते तथैव—

**मया वैरोचने यज्ञे प्रभविष्णुः सनातनः।**

**प्रदक्षिणीकृतः पूर्वं क्रममाणस्त्रिविक्रमम्।।**
**स इदानीमहं वृद्धः प्लवने मन्दविक्रमः।**
**यौवने च तदासीन्मे बलमप्रतिमं परम्।।**
**सम्प्रत्येतावदेवाद्य शक्यं मे गमने स्वतः।**
**नैतावता च संसिद्धिः कार्यस्यास्य भविष्यति।।**[१६]

अत्रापि पराक्रमप्रदर्शनप्रसङ्गे स्वकीयमसामर्थमेव जाम्बवान् प्रदर्शितवान्। अतस्तत्र प्रसङ्गौचित्यनिर्वाहाय स्मरामि क्रियापदस्यानौचित्यं नास्तीति स्वीकरणीयम्। अतोऽत्र क्रियौचित्यस्योदाहरणान्तरमेवाचार्येण देयम्। अपि चात्र मदीयं पद्यमिदं क्रियानौचित्यस्य भवितुमर्हति—

**नाहं भजामि भुवनाधिपतिं मुरारिं**
**शर्वं च हैमशिखरे सततं वसन्तम्।**
**नित्यं मदीयहृदये ननु सन्निविष्टां**
**प्राणेश्वरीं हि सुभगां सुमुखीं भजामि।।**[१७]

पद्येऽस्मिन् "प्राणेश्वरीं हि सुभगां सुमुखीं भजामि" इत्यंशे भजामि इति क्रियापदं तादृशं चमत्कारं न जनयति। यतो हि— भाजसेवायामिति धातुः श्लोकपूर्वभागे श्रद्धास्पदयोः हरिहरयोः विषये प्रयुक्तो विद्यते। भार्या च न हि श्रद्धास्पदा अपितु स्नेहास्पदा, अतोऽत्र इष्टदेवतोचितप्रयोक्तव्ये भजामि इति क्रियापदे प्रियाविषये प्रयुक्तम् औचित्यपूर्णं नास्ति।

वाक्येषु क्रियापदस्य प्राधान्येऽपि कारकैरेव वाक्यानि स्वार्थबोधकानि भवन्ति अतः कारकाणां महत्त्वपूर्णं स्थानं विद्यते। अतः आचार्यक्षेमेन्द्रः कर्तृप्रभृतिकारकाणामौचित्यानौचित्यविषये विचारयति। यतोहि औदार्यचरितैः कुलाभरणमैश्वर्यं यथा शोभते तथैव उचितैरेव कारकैः सान्वयं वाक्यं शोभते।

**कारकौचित्यम्–**

**सान्वयं शोभते वाक्यमुचितैरेव कारकैः।**
**कुलाभरणमैश्वर्यमौदार्यचरितैरिव।।**[१८]

**कर्तृपदौचित्यस्योदाहरणम्–**

**स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः।**
**चरति विमुक्ताहारः व्रतमिव भवतो रिपुस्त्रीणाम्।।**

अत्र रिपुस्त्रियो व्रतं कुर्वन्तीति वक्तव्ये स्तनयुगलं तासामश्रुजलस्नातं शोकाग्निसमीपतरवर्त्ति विमुक्तभोजनं विमुक्तमुक्ताहारं च सद्व्रतं चरतीत्युक्ते कर्तृपदमौचित्यपूर्णं विद्यते।

**अनौचित्यस्योदाहरणं परिमलस्य–**

**आहारं न करोति नाम्बु पिबति स्त्रैणं न संसेवते,**
**शेते यत्सिकतासु मुक्तविषयश्चण्डातपं सेवते।**
**त्वत्पादाब्जरजः प्रसादकणिकाकालोन्मुखस्तन्मरौ,**
**मन्ये मालवसिंह! गुर्जरपतिस्तीव्रं तपस्तप्यते।।**

अत्र गुर्जरपतिः युध्यात् पलायितः सन् मरुकाननप्रविष्टः परित्यक्तसुस्वादुभोजनादिसमस्तविषयश्चण्डातपोपसेवी

तपश्चरति यदुक्तं तत् कर्तृपदस्य विशेषाभिप्रायोचितं न किञ्चिदवलोक्यते। यतो हि शत्रुणाधिकपीडितः सन् स किमन्यत् कुर्यात् मरुकाननसेवनमन्तरा। अतोऽत्र कर्तृपदस्यानौचित्यमेव विद्यते चमत्कारकारित्वाभावात्।

कर्मपदौचित्यस्योदाहरणम ग्रन्थकारस्य लावण्यवत्याम्—

**सदा सक्तं शैत्यं विमलजलधारा परिचितं,**
**घनोल्लासः क्षमाभृत् पृथुकटकपाती वहति यः**
**विधत्ते शौर्यश्रीश्रवणनवनीलोत्पलरुचिः**
**स चित्रं शत्रूणां ज्वलदनलतापं भवदसिः।।**

अत्र शैत्यजननसामग्रीसत्त्वेऽपि 'भवदसिः शत्रूणां ज्वलदनलतापं विधत्ते' इत्यत्र ज्वलदनलतापमिति कर्मपदं कमपि चमत्कारविशेषं जनयति। अतोऽत्र कर्मपदस्यौचित्यं विद्यते। कर्मपदानौचित्यस्योदाहरणमवसरसारस्य ग्रन्थकारस्य—

**भग्नाहितश्वसितवातविबोध्यमानः काण्ठाश्रयेण सहसैव विवृद्धिमाप्तः।**
**तापं तनोति निहितारिविलासिनीनां, वह्निद्युतिर्भुवननाथ! भवत्प्रतापः।।**

अत्र किमपि वैचित्र्यं कर्मपदस्य नास्ति। यतो हि तापः तापमेव जनयति इति स्वतः सिद्धम्। तेन पावकतुल्यत्वत् प्रतापाः शत्रुपत्नीनां तापं तनोति तत् स्वाभाविकमेव। अतश्चमत्कारकारित्वाभावात् कर्मपदस्य 'तापम्' इत्यस्यानौचित्यं तेन रूपेण तिष्ठति। सामान्यतस्तु तस्यौचित्यमेव।

करणपदौचित्यस्योदाहरणं गौडकुम्भकारस्य—

**लाङ्गूलेन गभस्तिमान् बलयितः प्रोतः शशी मौलिना,**
**व्याधूता जलदाः सटाभिरुडवो दंष्ट्राभिरुत्तम्भिताः।**
**प्रोत्तीर्णो जलधिर्दृशैव हरिणा स्वैराट्टहासोर्मिभि-**
**र्लङ्केशस्य च लङ्घितो दिशि दिशि प्राज्यः प्रतापानलः।।**

अत्र हनुमता जलधितरणे सूर्यो लाङ्गूलेन बलयितः, किरीटप्रान्तेन शशी प्रोतः, स्कन्धस्थरोमावलिभिः मेघा व्याधूताः, दंष्ट्राभिस्तारा व्याधूताः, दृष्ट्या अब्धिरुत्तीर्णः, अट्टाट्टहासतरङ्गैः रावणस्य प्रतापानलः शमितः इत्येवं बहुभिः करणपदैरत्र चमत्कारप्रकटनात् तेषामौचित्यं सिध्यति।

करणपदानौचित्यस्योदाहरणम्—

**जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्धलक्षया।**
**दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवासुपाटवम्।।**

अत्र भगवतो नृसिंहस्य कोपरक्तया दृशैव क्षणलब्धलक्षया हिरण्यकशिपोः वक्षःस्थलं स्वयं भयात् विदीर्णमिव इति यदुक्तं तत् महापराक्रमशालिनः प्रतिनायकस्य शत्रोः प्रधाननायकनृसिंहप्रतापोद्दीपनसाधनभूताधिक-धैर्यस्य स्वयं विह्वलतया हृदयस्फुटनमित्युपचितमनौचित्यं 'दृशैव' इति करणपदस्य विद्यते। तेन करणपदानौचित्यं स्पष्टतयात्र सिध्यति।

सम्प्रदानस्यौचित्यस्योदाहरणं प्रभाकरभट्टस्य—

**दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते,**
**सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।**

**विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो,**
**यस्मादाविरभूत् कथाद्भुतमिदं यत्रैव चास्तं गतम्।।**

अत्र या सप्तद्वीपवसुन्धरा मानवैरतीवप्रत्यभिलाषविषया भवति सा च भार्गवेण (परशुरामेण) सिद्धा। सापि अन्नमुष्टिरिव विप्राय हेलयैव प्रतिपाद्यते इति निरतिशयौदार्यचमत्काररुचिरौचित्यरसास्वादेन रोमाञ्चिता वयम् पश्यत इत्येवमत्र 'विप्राय' इति सम्प्रदानपदस्य परमौचित्यं चमत्कारकारित्वात्।

अनौचित्यस्योदाहरणं राजशेखरस्य—

**पौलस्त्यः प्रणयेन याचत इति श्रुत्वा मनो मोदते,**
**देयो नैष हरप्रसादपरशुस्तेनाधिकं ताम्यति।**
**तद् वाच्यः स दशाननो ममगिरा दत्ता द्विजेभ्यो मही,**
**तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम्।।**

पद्येऽस्मिन् 'तुभ्यं ब्रूहि रसातलत्रिदिवयोर्निर्जित्य किं दीयताम्' इति पद्यचरणे तुभ्यमिति सम्प्रदानपदस्यानौचित्यं प्रकटितमाचार्यक्षेमेन्द्रेण। यतो हि लोकहितप्रवृत्तस्य मुनेः त्रैलोक्यकण्टकभूताय रावणाय रसातलस्य स्वर्गलोकस्य च दानमनुचितम्।

अत्रावधेयम्— यो याचको यत् किमपि यं याचते स याचकायावश्यं किञ्चिद् दद्यात् इति सार्वजनीनः पारम्परिको विधिश्शास्त्रीयः। न हि किञ्चिददत्वैव विसर्जयेदन्यथा याचकायादाता पापभाग् भवति। कथयति च तथा मनुः स्वकीय स्मृतौ—

**यत् किञ्चिदपि दातव्यं याचितेनानसूयया।**
**उत्पत्स्यते हि तत्पात्रं यत्तारयति सर्वतः।।**[१९]

अर्थात् पात्राय याचकाय अनसूयया यत्किञ्चिदपि अवश्यमेव दद्यात्।

संवतस्मृतावपि तथैव प्रतिपादितम्—

**श्रोत्रियाय कुलीनायाभ्यर्थिने हि विशेषतः।**
**यद् दानं दीयते भक्त्या तद् भवेत् सुमहत्फलम्।।**[२०]

अर्थात् श्रोत्रियाय कुलीनाय याचकाय दानात् सुमहत् फलं भवति। इत्येवं बहुषु धर्मशास्त्रेषु दानस्य फलानि कथितानि। भगवान् परशुरामो धर्मशास्त्रतत्त्वज्ञानी स रावणाय किञ्चिद्दत्वैव न निराकर्तुं शक्नोति। किञ्च रावणोऽपि परशुमन्तरा न किञ्चिद् ग्रहीष्यति। अत एव सर्वत्र साम्राज्यकाङ्क्षिणे रावणाय रसातलस्वर्गयोर्दानायाभिलाषा प्रकटिता। महापुरुषेभ्यो वरदानस्वरूपप्राप्तवस्तूनां दानं तेषामपमानोऽतः परशुरामः परशुं दातुं निषिध्यान्यवस्तुदानाय कथितवान्। अतोऽत्र सम्प्रदानकारकस्यानौचित्यं नास्ति। सम्प्रदानकारकानौचित्यस्य पद्यमिदमुदाहरणं भवितुमर्हति—

**यो लम्पटो धूर्तविचेष्टितोऽसौ लब्ध्वा धनं याति सुरालयं वै**
**दीनाय विप्राय ददाति नैव वेश्याजनायैव ददाति नित्यम्।।**[२१]

पात्राय दानं दद्यात् इति नियमो विद्यते, "देशे काले च पात्रे च तद्दान सात्विकं स्मृतम्"[२२] इति गीतावचनात्। विप्रं दीनं विहाय वेश्याजनाय दानमनुचितमतोऽत्र सम्प्रदानकारकस्यानौचित्यं सिध्यति।

अपादानौचित्यस्योदाहरणम् मालवरुद्रस्य—

**एतस्माज्जलधेर्मिताम्बुकणिकाः कश्चिद् गृहीत्वा ततः,**
**पाथोदाः परिपूरयन्ति जगतीं रुद्धाम्बरा वारिभिः।**
**भ्राम्यन् मन्दरकूटकोटिघटना भीतिभ्रमन्तारकाम्,**
**प्राप्यैकां जलमानुषीं त्रिभुवने श्रीमानभूदच्युतः।।**

अस्मात् समुद्रात् परिमिताम्बुकणिकाः प्राप्य मेघाः संसारं जलैः पूरयन्ति। तथा भगवान् श्रीमन्नारायणस्तस्मादेव भ्रमन् मन्दरकूटकोटिसंघर्षभयसञ्चलन्नेत्रतारकामेकां जलमानुषीं समुद्रजां भगवतीं लक्ष्मीं प्राप्य श्रीमान् भवति। अत्र सागरगतातिशयोत्कर्षविशेषस्य प्रदर्शनात् जलधेरित्यपादानकारकस्यौचित्यं सिध्यति।

अपादानकारकस्थानौचित्यस्योदाहरणं भट्टेन्दुराजस्य—

**आदाय वारि परितः सरितां मुखेभ्यः**
**किं नाम साधितमनेन महार्णवेन।**
**क्षारीकृतं च वडवादहने हुतं च**
**पातालमूलकुहरे विनिवेशितं च।।**

अत्र नदीप्रान्तेभ्यो यज्जलं गृहीतं समुद्रेण तस्य सम्यग् उपयोगं न विधाय दुरूपयोगमेव कृतवान्। इदं पद्यमन्योक्तिरूपेण विद्यते। अत्र सरिद्भ्य इति वक्तव्ये सरितां मुखेभ्यः इत्येवं कथने निरर्थकत्वान्मुखेभ्यः इत्यपादानकारकस्यानौचित्यं विद्यते इत्येवमाचार्यक्षेमेन्द्रः प्रतिपादितवान्।

अत्र किञ्चिद् विचारणीयमस्ति। कविरिन्दुराजभट्टः यत् 'सरितां मुखेभ्यः' इत्येवं 'मुखेभ्यः' इत्यपादानकारकं प्रयुक्तवान् तस्य कारणमिदमस्ति यत् सरितां जलमेव सर्वस्वम्। यथा दीनानामाहार एव सर्वस्वं भवति। तासां दीनानां सरितां मुखेभ्योऽग्रभागेभ्यः धारारूपेभ्यः जलरूपमाहारमादाय तस्यापव्ययमेव कृतवान्, न तु सुव्ययम्। यतो हि उदारा दीना अपि उपकाराय सर्वस्वं ददति। किन्तु त्वं सर्वं गृहीत्वापि तस्य जलस्य, धनस्य वा सूपयोगं न कृतवान्। इत्येवमतीवचमत्कारकारित्वात् 'मुखेभ्यः' इत्यपादानकारकस्यात्र अन्योक्तिद्वारा विशिष्टार्थलाभाय परमौचित्यमेव प्रदर्शितं भवतीति बोध्यम् न त्वनौ चित्यम्, अतः पद्यमिदमवादानानौचित्यस्योदाहरण न भवितुमर्हति अतः अस्मदीयपद्यमिदमपादानकारकानौचित्यस्य कथमपि ग्रहीतुं शक्यते—

**ये स्वार्थिनो द्रव्यपरायणाश्च येषां धनापूरणकर्म नूनम्।**
**तस्मात् समालभ्य धनस्य दानं दुःखस्य हेतुर्हि भवेत् सदैव।।**[२३]

कृपणेभ्यो धनग्रहणमनुचितमिति धिया 'तस्मादिति' अपादानकारकस्यात्रानौचित्यं सिध्यति।

अधिकरणकारकौचित्यस्योदाहरणं कुन्तेश्वरदौत्ये कालिदासस्य—

**इह निवसति मेरुः शेखरः क्ष्माधराणामिह विनिहितभाराः**
**सागराः सप्त चान्ये।**
**इदमहिपतिभोगस्तम्भविभ्राजमानं**
**धरणितलमिहैव स्थानमस्मद्विधानाम्।।**

एतस्मिन् पद्ये महाराजदूतोऽपि सामन्तस्थाने स्वप्रभुसमुचितसम्मानमासनाद्यलब्ध्वा चतुरः सः अहिपति भोगस्तम्भबिभ्राजमानं धरणितलमिहैव अस्मद्विधानां स्थानमित्यनेन आश्रयत्वेन अधिकरणत्वेन वा धरणितलम् इत्यस्यौचित्यं सूचितम्।

अत्र यद्यपि वक्तुराश्रयत्वेन स्वीकृतत्वाद् धरणितलम् अधिकरणं भवति। तथापि तत्र अस्ति क्रियाध्याहारस्य सत्त्वात् तस्याः क्रियायाः कर्तृकारकमेव धरणितलं न त्वधिकरणकारकम्। अतः कथं तदधिकरणकारकस्यौचित्यस्योदाहरणं भवितुमर्हति। अत उदाहरणमिदं विचारणीयमस्ति। अथवा चेद् इदं च अहिपतिभोगस्तम्भविभ्राजमानम् इति इदमहिपतिभोगस्तम्भविभ्राजमानं तस्मिन् इदमहिपतिभोगस्तम्भविभ्राजमाने धरणितल इहैव स्थानमस्मद्विधानाम् इति पाठः स्वीक्रियेत् तर्हि तस्येदमुदाहरणं भवितुमर्हति।

अधिकरणानौचित्यस्योदाहरणम्—

**तत्र स्थितं स्थितिमतां वर देव! दैवाद्**
**भृत्येन ते चकितचित्तमियन्त्यहानि।**
**उत्कम्पिनि स्तनतटे हरिणेक्षणानां**
**हारान् प्रवर्त्तयति यत्र भवत्प्रतापः।।**

अत्र त्वद्भृत्येन मया तस्मिन् देशे स्थितं यत्र भवत् प्रतापः कम्पतरलस्तनतटे हरिणदृशां हारान् प्रवर्तयति। अनेन प्रतीयते एकत्र भवत् प्रतापोऽतीव ज्वलति नान्यत्र। तेन स्तुतिव्याजेन निन्दैव प्रतीयते। फलतः 'तत्र' इत्यस्मिन् स्थले 'सर्वत्र' इत्यस्यैवाधिकरणपदस्यौचित्यं स्यात् न तु 'तत्र' इत्यस्य इत्येवमत्र प्रतिपादयति ग्रन्थकारः।

लिङ्गौचित्तम्—

**उचितेनैव लिङ्गेन काव्यमायाति भव्यताम्।**
**साम्राज्यसूचकेनेव शरीरं शुभलक्ष्मणा।।[२४]**

प्रस्तुतार्थोचितेन पुल्लिङ्गस्त्रीलिङ्गनपुंसकलिङ्गेन काव्यं भव्यतां प्राप्नोति। यथाहङ्कारादियुतं शरीरं भव्यतामुपैति। यथालिङ्गौचित्यस्योदाहरणम्—

**निद्रां न स्पृशति त्यजत्यपि धृतिं धत्ते स्थितिं न क्वचिद्**
**दीर्घां वेत्ति कथां व्यथां न भजते सर्वात्मना निर्वृतिम्।**
**तेनाराधयता गुणस्तव जपध्यानेन रत्नावलीं,**
**निःसङ्गेन पराङ्गनापरिगतं नामापि नो सह्यते।।**

अत्र वत्सराजेन रत्नावलीविरहविधुरचित्तस्य कामवस्थासमुचितं विदूषकेण सुसङ्गतायै यत् कथितं निद्रां न स्पृशति, धृतिं न त्यजति, स्थितिं न धत्ते दीर्घां कथां व्यथामिव वेत्ति, निर्वृत्तिं न भजते, तां विना तेन प्रियागुणजापिना तद्ध्याननिरतेन जनसङ्गत्यागिना अन्यायां कामिनीनां नामापि न सहते। तत्र स्थितिधृतिकथानिर्वृतीनां स्त्रीलिङ्गाभिधानेनाङ्गनात्वाध्या परमौचित्यं प्रतिपादितमाचार्येण क्षेमेन्द्रेण स्वकीयललितरत्नमालानामकग्रन्थस्थपद्येऽस्मिन् रोपेण लिङ्गानौचित्यस्योदाहरणम्—

**वरुणरजसमर्थास्वर्गभङ्गैः कृतार्था,**
**यमनियमनशक्ता मारुत्तोन्यायसक्ता।**
**धनदनिधनसय्या लज्जते मर्त्ययुद्धे,**
**दहनदलनचण्डा मण्डली मद्भुजानाम्।।**

अत्र रावणो वानरसङ्ग्रामर्षविषमविकाराविष्कारोचितं कथयति- वरुणादिलोकपालविशालबलाबलेपविप्लवकारिणी

मर्त्यमात्रयुद्धे लज्जते प्रचण्डा मद्भुजमण्डली इति स्त्रीलिङ्गेन निर्देशस्त्रैलोक्यविजयोचितस्य प्रतापस्य कठोरतामपहरन् अनौचित्यं सूचयति। यतो हि स्त्रीषु स्वाभाविकी कोमलतैव सूच्यते। त्रैलोक्यविजये या कठोरता अपेक्षिता भवति सा पुंस्येव सम्भवा। स्त्रियस्तु स्वभावतः कोमला भवन्ति अत एव भीरवो भवन्ति। ता न तदाधारभूमिरित्यनौचित्यस्य हेतुरत्र विद्यते।

वचनौचित्यविचारः—

**उचितैरेव वचनैः काव्यमायाति चारुताम्।**
**अदैन्यधन्यमनसां वदनं विदुषामिव।।**[२५]

उचितैरेकवचनद्विवचनबहुवचनैः काव्यं चारुतां प्राप्नोति। अदैन्योदारचित्तानां विदुषामिव वदनं यथा अयाञ्चया यद् रमणीयं चिरौचित्यं चारुभिर्वचोभिः सौन्दर्यमासादयति। वचनौचित्यस्योदाहरणमाचार्यक्षेमेन्द्रस्य नीतिलतायाम्—

**त्रैलोक्याक्रमणैर्वराहविजयैर्निःसंख्यरत्नाप्तिभिः,**
**प्रख्यातः स्वरसस्वयंवरशतैर्युद्धाब्धिमध्ये श्रियः।**
**साश्चर्यैर्बलिबन्धनैश्च बहुभिर्नित्यं हसत्युत्थितः,**
**पौलस्त्यः सकृदुद्यमश्रमवशाद्व्यासक्तनिद्रं हरिम्।।**

अत्र शुकसारणौ भगवतो रामचन्द्रस्य समक्षं रावणस्यैश्वर्यस्य वर्णनं कुर्वन्तौ कथयतो यद् विष्णुरेकवारमेव त्रैलोक्यमाक्रमितवान्, एकबारं वलिं बद्धवान्, किन्तु श्रमितः सन् शेषशय्यायां शेते। रावणस्तु पुनरनेकत्रैलोक्याक्रमणै-र्वराहविजयिनां (आखेटे विविधवराहविजयिनां) सुभटानां जयैरनेकरत्नप्राप्तिभिः समरसमुद्रमध्ये बहुवारविहितैः श्रियः स्वयंवरशतैर्बलिनां च लोकपालानां बन्धनैः प्रख्यातः, सदोत्थितः, सोत्साहः तथाविधं विष्णुं हसति। अत्र बहुवचनैरेव हरिवैलक्षण्यमुचितं समृद्धमौचित्यं समुपस्थापितम्।

अनौचित्यस्योदाहरणम् मातृगुप्तस्य—

**नायं निशामुखसरोरुहराजहंसः कीरीकपोलतलकान्ततनुः शशाङ्कः।**
**आभाति नाथ! तदिदं दिवि दुग्धसिन्धुपिण्डीरपिण्डपरिपाण्डु यशस्त्वदीयम्।।**

अत्र प्रशंसायां दुग्धसिन्धुपिण्डीरपिण्डपरिपाण्डूनि यशांसि इत्येवं बहुवचनैः वक्तव्ये यद् "दुग्धसिन्धुपिण्डीरपिण्डपरिपाण्डु यशः इति यदभिहितमेकवचनं तन्न औचित्यपूर्णं यशः संकोचचकरत्वात्। इत्येवमत्रैकवचनस्यौचित्यं न सिद्धयति।

विशेषणौचित्यम्—

**विशेषणैः समुचितैर्विशेष्योऽर्थः प्रकाशयते।**
**गुणाधिकैर्गुणोदारः सुहृद्भिरिव सज्जनः।।**

यथा अधिकगुणैः सुहृद्भिर्गुणोदारः सज्जनः शोभते तथैव समुचितैर्विशेषणैरेव काव्ये विशेष्योऽर्थोऽधिकां शोभां लभते। विशेषणौचित्यस्य क्षेमेन्द्रकृतमुनिमतमीमांसोदाहरणम्—

**चैत्रे सूत्रितयौवनान्युपवनात्यामोदिनी पद्मिनी,**
**ज्योत्स्नाप्रावरणानि रत्नबलभीहर्म्याणि रम्याः स्त्रियः।**
**सर्वं चारुत्तरं न कस्य दयितं यस्मिंस्तु तद् भुज्यते,**

**तन्मृन्निर्मितमामभाजनमिव क्षिप्रक्षयं जीवनम्।।**

अत्र युधिष्ठिरस्य वैभववर्णनप्रसङ्गे भौतिकपदार्थेषु अभावबुद्धिवादी कश्चन महामुनिः कथयति यत् चैत्रे सूत्रितयौवनानि उपवनानि, आमोदिनी पद्मिनी ज्योत्स्नाप्रावरणानि रत्नबलभीहर्म्याणि रम्याः स्त्रियः सर्वं चारुतरं, तथापि यश्चैषां भोगी स मृन्निर्मितः क्षिप्रक्षमजीवनोऽपक्वमृण्मयपात्रविशेष इव वर्तते।

अत्र क्षिप्रक्षयं मृन्निर्मितमित्यादि विशेषणं यदस्ति तेन विशेष्यार्थो शोभतेऽतः विशेषणानामौचित्यं सर्वथा सिद्ध्यति।

विशेषणानामनौचित्योदाहरणं भट्टलट्टनस्य—

**ग्रीष्मं द्विषन्तु जलदागममर्थयन्तां**
**ते सङ्करप्रभृतयो विकटास्तडागाः।**
**अब्धेस्तु मुग्धशफरीचटुलाचलेन्द्र-**
**निष्कम्पकुक्षिपयसो द्वयमप्यचिन्त्यम्।।**

अत्र ग्रीष्मं द्विषन्तु मेघागमं सङ्कटस्वभावा विस्तीर्णा सरोवरा प्रार्थयन्तु, समुद्रस्य तु लघुमीनचञ्चलेन मन्दराचलेनापि निष्कम्पं कुक्षिगतं पयः। एवम्भूतस्याब्धेः ग्रीष्मनिन्दनं मेघागमाभ्यर्थनं चेति विशेषणद्वयमपि अविचार्यमिति। अत्र तडागविशेषणयोः सङ्कटप्रकृतयो विकटा इत्यनयोरनौचित्यं प्रतिभाति। यतो हि निश्चेतनस्य तडागस्य स्वाभावाभावात् संकटत्वविकटत्वयोरभावः सम्पाद्यते।

उपसर्गौचित्यम्—

**योग्योपसर्गसंसर्गैर्निरर्गलगुणोचितः।**
**सूक्तिर्विवर्धते सम्पत् सन्मार्गगमनैरिव।।**[२६]

उचितैरेव प्र-परा-अप्-सम् प्रभृतिभिरुपसर्गैः सूक्तिः सत्काव्योन्नतिमासादयति, यथा सन्मार्गगमनैरैश्वर्यं वृद्धिमासादयति। उपसर्गौचित्यस्योदाहरणं क्षेमेन्द्रस्य मुनिमतमीमांसायाम्—

**आचारं भजते त्यजत्यपि मदं वैराग्यमालम्बते,**
**कर्तुं वाञ्छति सङ्गभङ्गगलितोत्तुङ्गाभिमानं तपः।**
**दैवन्यस्तविपर्ययैः सुखशिखाभ्रष्टः प्रणष्टो जनः,**
**प्रायस्तापविलीनलोहसदृशीमायाति कर्मण्यताम्।।**

यदा गन्धर्वाः दुर्योधनं पराजितवन्तः तस्य कालस्य वर्णनमस्ति। तस्मिन् समये सर्वो जनः सुखभ्रष्टः सदाचारं भजते, मदं त्यजति, वैराग्यमाश्रयति, सङ्गभङ्गेन विगलितोत्तुङ्गाभिमानं तपः कर्त्तुं वाञ्छति प्रायस्तापविगलितलोहपिण्डसदृशीं कर्मण्यतां प्राप्नोति। अत्र सोपसर्गस्य उत्तुङ्गशब्दस्य स्वाभावोन्नतिर्द्विगुणितां लब्धा येन मदमत्तजनगताभिमानरूपार्थस्य सम्यगौचित्यं सिध्यति।

अनौचित्यस्योदाहरणं कुमारदासस्य—

**अपि विजहीहि दृढोपगूहनं त्यज नवसङ्गमभीरु! बल्लभम्।**
**अरुणकरोद्गम एष वर्त्तते वरतनु! सम्प्रवदन्ति कुक्कुटाः।।**

एतस्मिन् पद्ये केवलं 'वदन्ति' इत्यनुपसर्गस्य क्रियापदस्य दानेनापि अभिप्रेतार्थलाभे 'सम्प्र' इत्युपसर्गद्वयस्य दानं किमपि चमत्कारित्वं नास्ति, अतस्तयोरनौचित्यमेव सिध्यति।

निपातस्यौचित्यम्—

**उचितस्थानविन्यस्तैर्निपातैरर्थसङ्गतिः।**
**उपादेयैर्भवत्येव सचिवैरिव निश्चला।।[२७]**

उचितपदनिवेशितैर्ग्राह्यैश्चादिभिर्निपातैः काव्यार्थसङ्गतिः सत्सहृदयैरिवासन्दिग्धा भवति।

निपातसंज्ञा पाणिनिना चादयोऽसत्त्वे प्रादयः इति सूत्राभ्यां क्रमशश्चादीनां प्रादीनामद्रव्यवाचिनां शब्दानां क्रियते। तेन निपातौचित्यकथनेन प्रादीनामपि ग्रहणं स्यात् पृथक्तया उपसर्गौचित्यविवेचनस्यैवानौचित्यं यद्यपि सिध्यति तथापि प्रादयः क्रियायोगे सत्येवोपसर्गसंज्ञका भवन्ति। तेषां क्रियापदस्य प्रयोगे एव प्रयोगः। चादीनां समुच्चयविष्मयविकल्पाद्यर्थविशेषबोधनाय पृथक्तया प्रयोगे दृश्यते उभयात्र चार्थविशेषोपलब्धिः। फलतः पृथक् पृथगौचित्यबोधनाय आचार्यः पृथग् विचारं कृतवान् इति बोध्यम्।

निपातस्यौचित्यस्योदाहरणं क्षेमेन्द्रस्य मुनिमतमीमांसायाम्—

**सर्वे स्वर्गसुखार्थिनः क्रतुगतैः प्राज्यैर्यजन्ते जडास्-**
**तेषां नाकपुरे प्रयाति विपुलः कालः क्षणार्धं च तत्।**
**क्षीणे पुण्यधने स्थितिर्न तु यथा वेश्यागृहे कामिनां**
**तस्मान्मोक्षसुखं समाश्रयत भोः सत्यं च नित्यं च यत्।।**

यथा क्षीणधनस्य वेश्यागृहे स्थितिर्न भवति तथैव क्षीणपुण्यस्य स्वर्गे स्थितिर्न भवति। अतः सत्यं नित्यं च मोक्षसुखं समाश्रयत इति तात्पर्यके पद्येऽस्मिन् 'सत्यं च नित्यं च यत्' इत्यंशे 'च' इति निपातस्य सर्वथा औचित्यं सिध्यति।

अनौचित्यस्योदाहरणं श्रीचक्रस्य—

**देवो जानाति सर्वं यदपि च तदपि ब्रूमहे नीतिनिष्ठं,**
**सार्धं सन्धाय जालान्तरधरणिभुजा निर्वृतो बान्धवेन।**
**म्लेच्छानुच्छिन्धि भिन्धि प्रतिदिनमयशो रुन्धि विश्वं यशोभिः,**
**सोदन्वन्मेखलायां परिकलय करं किञ्च विश्वम्भरायाम्।।**

पद्येऽस्मिन् 'देवो जानाति सर्वं यदपि च तदपि' इत्यत्र पूर्वापरयोरसम्बद्धत्वात् समुच्चययोग्यताभावात् 'च' इति निपातस्य पादपूर्त्यर्थमेव सत्त्वात् तस्य योजना औचित्यपूर्णा नास्ति।

कालौचित्यम्—

**कालौचित्येन यत्येव वाक्यमर्थेन चारुताम्।**
**जनावर्जनरम्येण वेषेणेव सतां वपुः।।**

यथा कालयोग्येन वेषपरिग्रहेण अवसरज्ञानां सतां शरीरं चारुतामेति, तथैव कालकृतौचित्ययुक्तेनार्थेन काव्यगतं वाक्यं चारुतामेवैति। कालत्वं नाम क्रियाश्रयेण स्वस्वरूपजनकत्वम् स चाखण्डो विभुर्नित्यश्च यद्यपि विद्यते तथापि कर्तृनिष्ठतत्तत्क्रियाश्रयत्वेन भूतभविष्यत्वर्तमानाभिधान्खेनोपाधिभेदाद् भिद्यते। सामान्यतया कालसामान्यलक्षणमस्ति दैशिकातिरिक्तसर्वाधारतानियामकसम्बन्धावच्छिन्नकार्यत्वावच्छिन्नकार्यत्वावच्छिन्नकार्यता निरूपितमधिकरणतया निमित्तकारणत्वम्। वर्तमानकालत्वं नाम वक्तृप्रयुक्त क्रियाजन्यबोधविषयत्वेन तात्पर्यविषयीभूत-क्रियाधिकरणत्वे सति वक्तृप्रयुक्तक्रियाजन्यबोधविषययावद्व्यापारप्रतियोगिकप्रागभावध्वंसाभावानधिकरणत्वे

सति वक्तृप्रयुक्तक्रियाधिकरणत्वम्। भविष्यत्कालत्वं च वक्तृप्रयुक्तक्रियाधिकरणकालप्रागभावप्रतियोगित्वम्। भूतकालत्वं च वक्तृप्रयुक्तक्रियाधिकरणकालध्वंसप्रतियोगित्वम्। कालत्रितयविषये शास्त्रेषु यत् प्रतिपादितं तस्य संक्षेपेण बोधायेदं विवेचनं विस्तरस्तु ग्रन्थेषु अवलोकनीयम्।

कालगतस्य औचित्यस्योदाहरणम्—

**योऽभूद् गोपशिशुः पयोदधिशिरश्चौरः करीषङ्कषः,**
**तस्यैवाद्य जगत्पते! खगपते! शौरे! मुरारे! हरे!।**
**श्रीवत्साङ्क! जडैरिति स्तुतिपदैः कर्णौ नृणां पूरितौ,**
**ही कालस्य विपर्ययप्रणयिनी पाकक्रियाश्चर्यभूः।।**

अत्र शिशुपालस्य कृष्णगतस्य भूतकालस्य गोपालबालः, पयोदधिचौरः, करीषङ्कषः इति अभिधानानि उक्त्वा साम्प्रतिकानि तस्य स्तुतिपदेषु जगत्पते! खगपते! मुरारे! हरे! इति यानि अभिधानानि तत्र यत् स्वकीयामरुचिं प्रतिपादयन्ति तत् कालगतस्य कथनस्य औचित्यं सिध्यति। अत्र पद्ये 'अभूत' इति भूतकालेनाश्चर्यपरिपोषरुचिरं वाक्यम् औचित्यपूर्णं भवति।

कालानौचित्यस्योदाहरणं वराहमिहिरस्य—

**क्षीणश्चन्द्रो विशति तरणेर्मण्डलं मासि मासि,**
**लब्ध्वा कश्चित् पुनरपि कलां दूरदूरानुवर्त्ती।**
**सम्पूर्णश्चेत् कथमपि तदा स्पर्द्धयोदेति भानो-**
**र्नो दौर्जन्याद् विरमति जडो नापि दैन्याद् व्यरंसीत्।।**

पद्येऽस्मिन् वर्तमानकालिकी विरमति इति, भूतकालिकी क्रिया व्यरंसीद् इति च प्रदत्ता कविना। उभयोर्भिन्नकालवर्तिन्योः क्रिययोः विरुद्धत्वात् कालगतमनौचित्यमत्र सिद्ध्यति।

इत्थमत्रौचित्यविचारचर्चायामाचार्यक्षेमेन्द्रः शाब्दिकसिद्धान्तानादाय तेषां काव्यगतप्रयोगमादायौचित्यानौचित्य-विचारं कृतवान्। काव्यगतार्थचमत्कारं विहाय प्रसङ्गादिविषयकौचित्यं तादृशं नादरति। अत एव क्वचित् क्वचित् ममारुचिस्तत्र प्रकटिता, अन्यत्र च सम्मतिः। समग्रविवेचनदृष्ट्या आचार्यस्यायं प्रयोगः परमश्लाघनीय इति शम्।

◆

## सन्दर्भाः


१. वाक्यपदीये १.
२. महाभाष्यपस्पशाह्निके
३. ध्वन्यालोकः प्रथमोद्योतः।
४. काव्यप्रकाशः प्रथमोल्लासे ४
५. औचित्य. वि. ७
६. औचित्य. वि. ३
७. औचित्य वि. १
८. ध्वन्यालोकः ३/६

९. वक्रोक्तिजीवितम् १/५३
१०. औचित्यविचारचर्चा, श्लोक सं. ८-१०
११. औचित्य वि.च. ११
१२. औचित्यविचारचर्चायां पदौचित्यविचारे।
१३. औचित्यविचारचर्चा १२
१४. समर्थः पदविधिः २/१/१
१५. औचित्यविचारचर्चा
१६. बाल्मीकि रा. कि.का. ५६/१५-१७
१७. मदीयम्
१८. औचित्यवि. २०
१९. मनुस्मृतौ ४/२/२८
२०. संवर्तस्मृतिः ४९
२१. मदीयम्
२२. गीता ४६
२३. मदीयम्
२४. औचित्यविचार. २१
२५. औचित्यविचार. २२
२६. औचित्यविचार. २४
२७. औचित्यविचार. २५

◆

**वाकोवाक्यम्**
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
**VĀKOVĀKYAṀ**
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 22- 34

# संज्ञापरिभाषाप्रकरणस्थसूत्रवृत्तिमीमांसा

**डॉ. रमाकान्तपाण्डेयः***

**अइउण्, ऋऌक्, एओङ्, ऐऔच, हयवरट्, लण्, ञमङणनम्, झभञ्, घढधष्, जबगडदश्, खफछठथचटतव् कपय् शषसर् हल्।**

इति शैवानि। एषामन्त्या: वर्णा: अनुबन्धा:, इत् संज्ञकत्वात्। अनन्त्यादहलत्वाच्चलण्'घटकाकारोऽपि इत्संज्ञक:। हकारादिष्वकार उच्चारणार्थ:।

**हलन्त्यम्-१/३/३** इत्यत्र हल्पदस्य प्रविष्टत्वात्, 'आदिरन्त्येन सहेता' इत्यत्रेतिपदार्थप्रविष्टत्वात् इत्पदार्थप्रसिद्ध्युत्तरं हल्पदार्थप्रसिद्धः, हल्पदार्थप्रसिद्ध्युत्तरं इत् पदार्थप्रसिद्धिरित्यन्योन्याश्रयस्तदाह—

**हलन्त्यम्** (आ०सू०) हलिति सूत्रस्यान्त्यमित् स्यात्।

**आदिरन्त्येन सहेता (१-१-७१).** अन्त्येत्सदृशेन सहित आदिसदृश: स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठान्ततानिरुपकस्य स्वघटकानुयोगिकसादृश्यप्रतियोगित्वेन विवक्षितवर्णनिष्ठादितानिरुपकस्य समुदायस्य घटकानां संज्ञा। **हलन्त्यम् (१-३-३)**—आद्योच्चारणविषयीभूतो य हकारादिलान्तसमुदायस्तस्य अन्त्यम् इत् स्यात्। तस्माद् उपदेश: शासनकरणीभूत धातुप्रातिपदिकप्रत्ययनिपातागमादेशा: इत्संज्ञका:।

**उपदेशेऽजनुनासिक इत् (१-३-२)** आद्योचारणविषयीभूतत्वविशिष्टानुनासिकविशिष्टाकारादिचान्त-समुदायघटकवर्णइतिपदप्रयोज्यबोधीयविषयताश्रय: स्यात्। यथा-लण् सूत्रे अकार:। अणादिसंज्ञास्वनु-बन्धा इत्पदवाच्यविषयताश्रया: न भवन्ति। 'अनुनासिक' इत्यादिनिर्देशात्।

**ऊकालोऽज्झ्रझस्वदीर्घप्लुत:।। १/२/२७।**

स्वोच्चारणाधिकरणीभूतकालसदृशकालविशिष्ट अच् ह्रस्वदीर्घप्लुतसंज्ञक: स्यात्। ऊपदस्य स्वोच्चारणाधिकरणीभूतकालसदृशे लक्षणा। उश्च ऊश्च ऊश्च३ व: स कालो यस्य इति समानाधिकरणो बहुब्रीहि:। वां काल इवेत्यादि तस्यैव विग्रहस्य फलितार्थकथनम्।

सम्भवति समानाधिकरणे व्यधिकरणस्यान्याय्यत्वात्। ह्रस्वादिश्चोदात्तादिभेदेन त्रिधेति।

**उच्चैरुदात्त: - १/२/२९** कण्ठादिषु सभागेषु उर्ध्वभागे निष्पन्नोऽजुदात्तसंज्ञ: स्यात् यथा आ, ये।

**नीचैरनुदात्त: - १/२/२** - कण्ठादिषु सभागेषु अधोभागे निष्पन्नोऽजनुदात्तसंज्ञक: स्यात्।

**समाहार: स्वरित: १/२/३।** धर्मिणोरेकत्रसमाहारासम्भवादाह वर्णधर्माविति—उदात्तानुदात्तत्वे, वर्णधर्मौ समाह्रियेते यत्राचि स: स्वरित: स्यात्।

**तस्यादित उदात्तमर्धह्रस्वम्। १/२/३२।** ह्रस्वग्रहणविवक्षितत्वे दीर्घस्वरितादीनां ग्रहणासम्भवाद्

---

* व्याकरणविभाग; का.हि.वि.वि., वाराणसी.

ह्रस्वग्रहणमविवक्षितम्=शाब्दबोधरहितम्। स्वरितस्यादावर्धोदात्तं ज्ञेयम्। पारिशेषादुत्तरार्धम्नुदात्तं बोध्यम्। उदात्तस्वरितपरत्वेऽनुदात्तश्रवणं भवति। उदात्तस्वरितपरत्वाभावे उदात्तश्रुतिर्भवति। यथा क्व वोऽश्वाः, रथानां न येऽराः, शतचक्रं योऽह्य एतेष्वनुदात्तः। 'अग्निमीळे' इत्यत्रोदात्तश्रुतिः।

**मुखनासिकावचनोऽनुनासिकः १/१/८** नासिकावचनोऽनुनासिकसंज्ञकः स्यात्। प्रासादवासिन्यायेन

मुखग्रहणं प्रत्याख्यातम्। एवं प्रकारेण-अ इ उ ऋ प्रत्येकमष्टादशभेदाः। विवृतस्य ऌवर्णस्य द्वादशभेदाः, ईषत्स्पृष्टप्रयत्नवतः ऌवर्णस्य तु दीर्घभेदो भवत्येव, अत एव 'ऌति ऌ वा' इति भाष्यवार्तिकं सङ्गच्छते।

**तुल्यास्यप्रयत्नं सवर्णम्–१/११/९**–यद्वर्णजनकावास्यप्रयत्नौ यद्वर्णजनकाभ्यामास्यप्रयत्नाभ्यां तुल्यौ तयोर्मिथः सवर्णसंज्ञा स्यात्।

**कस्य किं स्थानमिति जिज्ञासायामाह–**

अकुहविसर्जनीयानां कण्ठः।

इचुयशानां तालुः।

ऋटुरषाणां मूर्धा।

ऌतुलसानां दन्तसंयुक्तप्रदेशाः।

उपूपध्मानीयानामोष्ठौ।

ञमङ्णनानां नासिका; स्वस्थान-कण्ठादिश्च।

एदैतोः कण्ठतालुः।

ओदौतोः कण्ठोष्ठम्।

वकारस्य दन्तोष्ठम्।

जिह्वामूलीयस्य जिह्वामूलम्।

नासिकाऽनुस्वारस्य, लाघवादादौ स्थानोपात्तम् **(इति स्थानानि)**

यत्नो द्विधा—आभ्यन्तरो बाह्यश्च।

आद्यश्चतुर्धा—स्पृष्टेषत्स्पृष्टविवृतसंवृतभेदात्।

तत्र स्पर्शसंज्ञकानां वर्णानां स्पृष्टप्रयतनम्।

अन्तःस्थानामीषत् स्पृष्टं प्रयतनम्।

ऊष्मस्वरयोः विवृतप्रयतनम्।

प्रयोगे ह्रस्वाकारस्य संवृतम् प्रयतनम्।

शब्दान्वाख्याने तु विवृतमेव।

संवृतप्रयतनस्य व्यवस्थायां प्रमाणमाह—**अ अ ८/४/६८।**

लुप्तषष्ठ्यन्तप्रथमाकारः स्वभावतः विवृतः, द्वितीयाकारश्च संवृत अत एव न सवर्णदीर्घः। विवृतस्य स्थाने संवृतो विधीयते तथा च धात्वादिषु पठितोऽकारो संवृतः। सम्पूर्णाष्टाध्यायीस्थसूत्रं प्रत्यस्यासिद्धत्वात् दण्डानयनमित्यादौ दण्डघटकाकारो विवृत एव। अत असिद्धविधायकसूत्रमाह-पूर्वत्रासिद्धम्'' लक्षणञ्चाधिकारश्चेति। तस्मात् पूर्वशास्त्रं प्रति परशास्त्रमसिद्धम्।

पूर्वत्वस्य परत्वे नित्यसाकांक्षतया परत्वमिति लब्धम्। पूर्वपरत्वयोरवधौ नित्यसाकाँक्षतया कस्मात् पूर्वमिति परमित्याकाँक्षायामुपस्थिततत्वादस्मादेव पूर्वं परमिति ग्राह्यम्। इत्यतः पूर्वं सप्ताध्यायः एकः पादश्चेति परं त्रयः पादास्तस्मात् सप्तानामध्यायानां समाहारः सप्ताध्यायी पादेन सह वर्तत इति सपादा, सा चासौ सप्ताध्यामीति सपादसप्ताध्यायी, त्रयाणां पादानां समाहार इति त्रिपादी, तथा च सपादसप्ताध्यायी शास्त्रं प्रति त्रिपादीशास्त्रमसिद्धमिति लक्षणस्यार्थः।

त्रिपाद्यामपि पूर्वं प्रति परं शास्त्रमसिद्धमित्यधिकारस्यार्थः। एतत् प्रयोजनन्तु किम्बुक्तम्।

**बाह्यप्रयत्नास्तु**—विवारः संवारः श्वासो नादो घोषोऽघोषोअल्पप्राणो महाप्राण उदात्ताऽनुदात्तः स्वरितश्चेति। बाह्यत्वञ्च-मुखस्याधस्ताद् गलविवरविकाससंकोचादिकार्यकारित्वम्।''

षट्षष्टिवर्णानां—ब्राह्यप्रयत्नाः।

खयां यमाः खयः क पौ विसर्गः शर् एव च।
एते श्वासानुप्रदाना अघोषाश्च विवृण्वते।।
कण्ठमन्ये तु घोषाः स्युः संवृता नादभागिनः।
अयुग्मा वर्गयमगा यणश्चाल्पासवः स्मृताः।।

खयां यमाः १० (दश)
खयः १० (दश)
जिह्वामूलीयोपध्मानीयौ ०२ (द्वौ)
शर् ०३ (त्रयः)
विसर्गः ०१ (एकः)
**योगः २६ षड्विंशतिर्वर्णानां, विवारश्वासाघोषप्रयत्नाः।**
हशः २० (विंशतिः)
तेषांयमाः १० (दश)
अनुस्वारः ०१ (एकः)
स्वराः ०९ (नव)
**योगः ४० चत्वारिंशशत्वर्णानां संवारनादघोषप्रयत्नाः।**
अयुग्मा वर्गयमगाः १५ वर्गेषु प्रथमतृतीयपञ्चमाः।
यमाः १० दश
स्वराः ०९ नव
यणः ०४ चत्वारः
योगः ३८ अष्टत्रिंशत्वर्णानामल्पप्राणप्रयत्नः।
युग्माः १० (दश)
यमाः १० (दश)
शलः ०४ (चत्वारः)
अनुस्वारः ०१ (एकः)

विसर्गः ०१ (एकः)

जिह्वामूलीयः ०१ (एकः)

उपध्मानीयः ०१ (एकः)

**योगः २८ अष्टविंशतिर्वर्णानां महाप्राणप्रयत्नः।**

**यमिति**—"चत्वारो यमाः स्मृताः" इति पाणिनिशिक्षा, तदनुसारं चत्वारो यमा इति केषाञ्चित् काशिकेयविदुषां मतम्। तत्रप्रमाणमाह-कुं खुं गुं घुं यमाः" इति प्रातिशाख्यसूत्रम्।

विंशतिर्यमा इति केषाञ्चित् विदुषां मतम्। तत्रप्रमाणमाह—प्रातिशाख्यसूत्रभाष्यं-"उपलक्षणमेतद्" इति प्रातिशाख्यवाक्यम्। 'तथा च'-चुं छुं जुं झुं इत्यादेरपि ग्रहणम्। तस्मात् प्रतिवर्गं चत्वारःतदनुसारं विंशतिर्यमा इति। अतएव पूर्वाचार्यैः "वर्गेषु" इति सप्तमीबहुवचनप्रयुक्तम्।

यम्स्वरुपम्—वर्गेषु प्रथमानां चतुर्णां पञ्चमे परे पूर्वसदृशो वर्णः यमिति।

यथा—पालक्किनी, चख्ख्नतुः अग्ग्निः घघ्नन्ति, पत्त्यौ इत्यादि।

पूर्ववर्णितबाह्यप्रयत्नाः सवर्णसंज्ञायामनुपयुक्ताः सन्तोऽपि स्थानेऽन्तरतमः"सूत्रपृवृत्तावुपयोगिनइति बोध्यम्।

स्पर्शा इति—कादयो मावसानाः-

श्रीमद्भागवतेऽपि—

स चिन्तयन् द्व्यक्षरमेकदाम्भसि,

उपाश्रृणोद् द्विर्गदितं वचो विभुः।

स्पर्शेषु यत् षोडशमेकविंशम्

निष्किञ्चनानां नृप यद्धनं विदुः।।

अनन कवर्गादीनामनादित्वं सिध्यति। (द्वितीयः स्कन्धः अ०-९)

**(ऋलृवर्णयोर्मिथः सावर्ण्यम् वाच्यम्।** (वा०)–)

आ च आ चेति रलौ, तौ च तौ वर्णौ, इति ऋलृवर्णौ तयोरिति ऋलृवर्णयोः। प्रथमोपरित्त्वेन प्रथमान्तानां विग्रहः।

उश्च उल् चेति ऋलोः तयोः वर्णयोः ऋलृवर्णयोःनहि पदान्ताः परेऽणः सन्ति" इति भाष्यानुरोधात् आ च लृवर्णश्चेत्यपि बोध्यम्।

अकारहकारयोः इकारशकारयोः, अकारषकारयोः लृकारसकारयोश्च सावर्ण्ये प्राप्ते-

**नाऽज्झलौ-१/१/१०**–आश्च आश्चेति औ आभ्यां सहितः आसहितः, आसहितश्चासौ अच् इति आच्, आच्च हल्चेति आज्शऽलौ न आऽऽजझलौ, इति नाऽज्झलौ, नैकधादिवत् समासः। तस्माद् आच् हल् एतौ सवर्णौ न भवतः।

अतएव—ग्रहणकशास्त्रात् हकारादीनामच्पदबोध्यत्वं न भवति।

प्रसिद्धमेवेति—**अणुदित् सवर्णस्य चाप्रत्ययः (१/१६९)।**

संज्ञासूत्रमिदम्। सवर्णस्य अणुदित् बोधकमिति। प्रत्ययपदं न प्रत्ययसंज्ञकपरमपितु तद्भिन्नपरम् तथा अविधीयमानत्वविशिष्टाण् विधीयमानाविधीयमानोभभ्यसाधारणोदित् सवर्णस्य बोधकम्। ग्राहकसूत्रेऽण् परेणैव एतदपवादसूत्रमाह।

**तपरः तत्कालस्य–**

तः परो यस्मात् तात् परश्च तपरः समकालसवर्णस्य बोधकः। सवर्णपदानुवृत्या-हरिभिरित्यादौ नैस्।

**वृद्धिरादैच्–१/१।** अदैच् पदाभिन्ना वृद्धिः। **अदेङ्गुणः १/१/२।** अदेङ्पदाभिन्नः गुणः।

**भूवादयो धातवः १/३/१।**

क्रियावाचित्वे सति भ्वादिगणपठितानुपूर्विसदृशानुपूर्विमन्तः शब्दाः धातुसंज्ञकाः स्युः।

**प्राग्रीश्वरान्निपाताः–१/४/५६।** अधिरीश्वरे सूत्रात् प्राग् निपाता इत्यस्याधिकारः।

**चादयोऽसत्वे। १/४/५७।** द्रव्यप्रतियोगिकभेदविशिष्टत्वे सति चादिगणपठितानुपूर्विसदृशानुपूर्विमन्तः निपाताः स्युः।

**प्रादयः १/४/५८**—स्पष्टम्।

**उपसर्गाः क्रियायोगे१/४/५९।**

यत्क्रियासम्बन्धिप्रादयस्तत् क्रियां प्रत्येव तेषामुपसर्गत्वम्। द्वाविंशतिर्प्रादयः।

प्र, परा, अप्, सम्, अनु, अव, निस्, निर्, दुस्, दुर्, वि, आङ्, नि, अधि, अपि, अति, सु, उत्, अभि, प्रति, परि, उत्—एते प्रादयः।

**न वेति विभाषा–१/१/४४**—निषेधविकल्पयोः विभाषासंज्ञा स्यात्।

विभाषा त्रिविधा—१. प्राप्तविभाषा २. अप्राप्तविभाषा ३. उभयत्रविभाषा।

उभयत्रविभाषार्थमेव सूत्रमिति।

**स्वं रुपं शब्दस्याशब्दसंज्ञा–१/१/६८।**

शब्दस्य स्वं रूपमित्युभयं संज्ञि शब्दशास्त्रीयसंज्ञां विना।

**येनविधिस्तदन्तस्य–१/१/७२।** अभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकं तद् योग्यञ्च यत् पदं तत् तदन्तस्य बोधकम्। "समासप्रत्ययविधौ प्रतिषेधः" (वा०) अतएव" द्वितीया श्रितेत्यादिना परमकृष्णश्रितः इत्यत्र नायं समासः।

उगिद्वर्णग्रहणवर्जम् (वा०) तेनातिभवतीत्यत्र ङीप्।

**विरामोऽवसानम्। १/४/१०।** वर्णोच्चारणानाभाव अवसान संज्ञः स्यात्।

**परः सन्निकर्षः संहिता। १/४/१०९।**—वर्णानां स्वभावसिद्धार्थमात्रातिरिक्तकालव्यवायशून्यत्वविशिष्टः सन्निधिः संहितासंज्ञः स्यात्।

**सुप्तिङन्तं पदम्–१/४/१४।**—सुबन्ततदादिसतिङन्ततदादिश्च पदसंज्ञकः स्यात्।

**हलोऽनन्तराः संयोगः १/१/७।** स्वरैरव्यवहिताः हलः संयोग संज्ञाः स्युः।

**ह्रस्वं लघु–१/४/०** स्पष्टम्।

**संयोगे गुरु १/४/१।** स्पष्टम्। देवदत्तः। अत एव दकारोत्तरवर्त्ति अकारो गुरु सञ्ज्ञकः। संयोगस्त्वव्यवहितो विवक्षितस्तेन। देवदत्तघटकवकारोत्तरवर्ति, अकारः न गुरुसंज्ञकः **दीर्घञ्च १/४/१२।** स्पष्टम् तथा च गुणानामितिन्यायो व्यभिचरितः। **प्रथमाध्यायस्थानां सन्धिकार्योपयोगिनीनां संज्ञानां प्रकरणसमाप्तम्।**

## परिभाषाप्रकरणम्।

**परिभाषात्वन्नाम–**स्वदेशे वाक्यार्थबोधजनकत्वे सति लक्ष्यधर्मिकसाधुत्वप्रकारकाप्रामाण्या

ज्ञानानास्कन्निदतबोधोपयोगिबोधजनकत्वम्। प्राय: परिभाषासूत्रेषु-यत्र, तत्र, विधीयते, उपतिष्ठते इति चत्वारि पदानि अध्याह्रियन्ते।

**इको गुणवृद्धी–१/१३** यत्र गुणपदप्रयोज्यो गुणो विधीयते, बृद्धिपदप्रयोज्या च बृद्धिर्विधीयते तत्र=इक'' इति षष्ठ्यन्तंपदमुपतिष्ठते। तेन दिव औत्, त्यादादीनाम इत्यादौ न क्षति:।

**अचश्च–१/२/२८**—यत्र ह्रस्वदीर्घप्लुतेदन्यतमपदप्रयोज्या: ह्रस्वदीर्घप्लुता: विधीयन्ते, तत्र अच: इति षष्ठयन्तं पदमुपतिष्ठते।

**आद्यन्तौ टकितौ। १/१/४६**। टकितावाद्यन्तौ भवत:।

**मिदचोऽन्त्यात् पर:–१/१/४७**— अच इति निर्धारणे षष्ठी।

निर्धारणषष्ठ्यां समुदाय, अवयव: पृथक्कृति प्रयोजको धर्मश्च इति त्रय अंशा: भवन्ति।

स्वघटकत्वं, स्वघटकेतरावृत्तिधर्मवत्वञ्चैतदुभयसमबन्धेन अजारब्धसमुदायघटकान्त्यादच: परत्वविशिष्टस्त-स्यैवान्तावयव: मित् भवति।

**षष्ठी स्थानेयोगा–१/१/४९**—स्थाने योगोऽस्या: सा स्थानेयोगा, निपातनात् सप्तम्यालुक्। यद्वा—स्थानेन योगोऽस्या सा स्थानेयोगा निपातनादेत्वम्। प्रथमपक्षे निमित्तत्वं सप्तम्यर्थस्तथाच—स्थाननिमित्तिक षष्ठी बोध्येति।

द्वितीये तु निरुपित्तत्वं तृतीयार्थस्तथाच स्थाननिरुपिताषष्ठी बोध्येति। उभयत्रापि षष्ठयर्थनिर्धारक एव।

वृत्तिस्तु—अनिर्धारितसम्बन्धविशेषा या षष्ठी, सा स्थाननिरुपितसम्बन्धार्थिका बोध्या।

स्थानाम् (वाच्यपर:) इति केचिदाहु:। अन्ये तु स्थीयत स्थानमिति भावे ल्युट। तस्मात् प्रसङ्ग: स च स्थितिरुप:। स्थितिश्च स्वविषयकोच्चारणरुपा तथा च विषयविषयिभाव: षष्ठ्यर्थ:।

तिष्ठन्त्यर्था: यत्र इति कर्तृल्युड्न्त पक्षे वाच्यवाचकभावसम्बन्ध:। स्थानपदार्थनिरुपितवाचकतावती षष्ठी। स्वविषयकोच्चारणरुपस्थितिनिरुपिताविषयतावती षष्ठी वेति।

**स्थानेऽन्तरतम:-१/१/५०** योगविभाग:।

स्थाने, अन्तरतम इति योगद्वयम् ''पाठक्रमादर्थक्रमो बलीयान् '' इत्युक्त्या अन्तरतम इति प्रथमो योग:। प्रसङ्गार्थकस्थाने शब्द अनुवर्तते। प्रसङ्गे सति सदृशतम आदेशो भवति। प्रथमसूत्रार्थ:। द्वितीये—तु अन्तरतम: स्थाने इति पदद्वयमनुवर्तते।

तेन—प्रसङ्गे सति स्थानेनैवान्तरतमादेशो भवति। इति द्वितीयसूत्रस्यार्थ:। प्रथमेनैव सिद्धे द्वितीयं नियमार्थक इति।

प्रसङ्गे सति प्राप्यमाणानां मध्ये स्थानेनैवान्तरतमादेशो भवति। न तु गुणादिना, तथा च सिद्धेयं परिभाषा—

**यत्रानेकविधमान्तर्यं** तत्र स्थानत आन्तर्यं बलीय इति।

स्थानकृतान्तर्यन्तु—सुध्युपास्य:—इको यणचि

अर्थकृतान्तर्यम् क्रोष्टा—तृज्वत् क्रोष्टु:

गुणकृतान्तर्यम्—वाग्घरि: झयो होन्यतरस्याम्

प्रमाणकृतान्तर्यम्—अमू अमी

**तस्मिन्निति निर्दिष्टे पूर्वस्य–१/११/६६**—

औपश्लेषिकाधिकरणसप्तम्यन्तपदघटिते शास्त्रे—निर्दिष्टे पूर्वस्येति पदद्वयमुपतिष्ठते।

**तस्मादित्युत्तरस्य–१/१/६७** अवधिबोधदपञ्चम्यन्तपदघटिते शास्त्रे निर्दिष्टे उत्तरस्य पदद्वयमुपतिष्ठते।
**अलोन्त्यस्य–१/१/५२** स्थाननिरुपितषष्ठ्यन्तपदघटिते शास्त्रे अलोऽन्त्यस्येति पद्वयमुतिष्ठते।

**ङिच्च–१/१/५३** ङिदादेशबोधकपदघटिते शास्त्रे अन्त्यस्य अल इति पदद्वयमुपतिष्ठते। अनेकाल इत्यस्यपवादभूतेयम्। अलोऽन्त्यस्येति परिभाषापवादः।

**अनेकाल्शित् सर्वस्य–१/१/५५** अनेकालशिदादेशबोधकपदघटिते शास्त्रे सर्वस्य इति पदमुपतिष्ठते।

अलो-न्त्यपवादः। परत्वात्—"आदेः परस्य" इत्येतदपि बाध्यते।

स्वरितेनाधिकारः—स्वरितत्वविशिष्टपदमधिक्रियते।

वैशिष्ट्यं तृतीयार्थः वैशिष्ट्यञ्च-स्वज्ञाप्यत्वेन। स्वरितत्वञ्चाधिक्रियमाणपदघटकाज्निष्ठम्।

परत्वेनबाधकत्वे प्रमाणमाह—परनित्यान्तरङ्गापवादानामुतरोत्तरं बलीयः। अतएव उत्तरञ्चेति उत्तरञ्च उत्तरोत्तरम्-आनुपूर्व्ये द्वे वाच्ये" कर्मधारयवदुत्तरेषु।

"असिद्धं बहिरङ्गमन्तरङ्गे"-बहिरङ्गशास्त्रीयनिमित्तसमुदायघटकनिमित्तकत्वमन्तरङ्गत्वम्" तच्चानेकविधम् वाह ऊठ इति सूत्रेण ज्ञापिता।

अकृतव्यूहाः पाणिनीयाः—अन्तरङ्गशास्त्रनिमित्तविनाशसम्भावनायां तत् सम्बन्धिकार्यं पूर्वमेव न कुर्वन्ति।

प्रथमाध्यायस्थानां परिभाषाणां प्रकरणं प्रायेण समाप्तम्।

## अथाच्संहिता

**इको यणचि–६/२/७**—अजव्यवहितपूर्वत्वविशिष्टस्येकः स्थानेऽन्तरतमो यण् स्यादचि संहितायां विषयभूतायाम्। सुधी उपास्य इति स्थिते। स्थानकृदान्तर्यवशादिकारस्य यकारः। सुध्य् उपास्य इति जाते।
**अनचि च-८/४/४७**। अजव्यवहितोत्तरत्व शिष्टस्य यरः द्वित्वं वा भवति न त्वचि। वाक् वाक्क् इत्यत्र द्वित्वानुरोधादनचि, इति नास्ति पर्युदासः। अचो विध्यर्थः, अनचि प्रसज्यप्रतिषेधपरः।

**स्थानिवदादेशोऽनल्विधौ–१/१/५६**। स्थानिना तुल्यं—स्थानिवत् न तु स्थानिनि स्थानिनः इवेति, उपमानोपमेयोरसमानवचनत्वात्। तथा—स्थानिप्रतियोगिगिकसादृश्यवानादेशः स्यात्। स्थानि यत् कार्यं धर्मं वा लभते आदेशस्तत् कार्यं तद्धर्मञ्च लभतामिति यावत्। न तु स्थान्यववाल्वृत्तिधमर्मावान्निोद्दश्यताकविधौ। अत एव यकारस्य स्थानिवद्भावेनाच्त्वं अनल्विधाविति निषेधात् , तेन द्वित्वनिषेधः न स्यात्।

अनल इत्युत्त्यैव सम्बन्धसामान्यषष्ठ्या विधावित्यस्य लाभात् समासचतुष्टयलाभार्थविधिग्रहणं व्यर्थं तस्मादुत्तरपदलोपिसमासद्वारा सकलविधिपरिग्रहार्थविधिशब्देन प्रधानन्यायबाधाङ्गीरेण अलाश्रितविधिमात्रग्रहणम्।

अलमाश्रयतेऽलाश्रयः स चासौ विधिरित्यल्विधिः। अत्र मध्यमपदस्याश्रयस्य शाकपार्थिवत्वात् लोपः।

अलाविधिः अलः परस्यविधिः, अलः विधिः, अलिविधिः, किञ्च विशेष्यतया विशेषणतया अलाश्रयणे ऽपि प्रवृत्तिः।

यथा—प्रदीव्य प्रपठ्य।

**न पदान्तद्विर्वचनवरेयलोपस्वरसवर्णानुस्वारदीर्घजश्चर्विधिषु। १/१/५८** पदचरमावयवकर्मकविधौ द्वित्वादिविधौ च परनिमित्तकाजदेशः स्थानिवत् न स्यात्।

**अथोदाहरणानि—**

पदचरमावयवकर्मकविधौ—एषो यन् हसति।

**द्विर्वचने**—सुद्ध्युपास्य:

**वरे**—यायावर:

**यलोपे**—याति:

**स्वरे**—चिकीर्षक:

**सवर्णामनुस्वारयो:**-शिण्ढि

**दीर्घे**—प्रतिदीव्ना

**जशि**–सग्धिश्चमे

**चरि**—जक्षतु:।

**झलां जश् झशि–८/४/५३** झलां जश् स्याद् झशि। इति पूर्वस्यधकारस्य दकार:।

**अदर्शनं लोप:–१/१/६०** शास्त्रतोऽर्थतो वा प्रसक्तस्योच्चारणकृतसत्ताभावो लोप: स्यात्।
शास्त्रतोऽनुबन्धादीनाम् वारि राजेत्यादिच,
तत्र हि—स्वौजसित्यादिना सो: प्रसक्ति:। अर्थत:—ल्यबन्ते बोध्यम् श्वशुराज्जिह्रेति इति।
प्रसक्तस्येति किम्—ग्रामे तिष्ठति ल्यब्लोपे पञ्चमी स्यात्।

**संयोगान्तस्य लोप:–८/२/२३** संयोगान्तं यत् पदं तस्यान्त्यस्याल: लोप: स्यात्। इति यलापे प्राप्ते **यण: प्रतिषेधो वाच्य:**'' यणो मयो द्वे वाच्ये'' यण् इति पञ्चमी मय् इति षष्ठी पक्षे—यकारस्यापि द्वित्वम्। तस्मात् चत्वारि रुपाणि।

१. एकधमेकयम् २. द्विधं द्वियम् ३. त्रिधमेकयम् ४. एकधं द्वियम् सुद्ध्युपास्य:, मध्वरि:, धात्रंश:, लाकृति:।

**नादिन्याक्रोशे पुत्रस्य-८/४/४८**—आदिनीशब्दाव्यवहितपूर्वत्वविशिष्टस्य पुत्रशब्दस्य अजव्यवहितपरो यो यर् तस्य द्वित्वं न स्यात् आक्रोशे गम्यमाने। पुत्रादिनी त्वमसि पापे आक्रोशे किम्-वास्तविककथने-द्वित्वं स्यादेव-पुत्त्रादिनी सर्पिणी। तत्परे च (वा०) पुत्रशब्दात्परो यो आदिनी शब्दस्तदव्यवहितपूर्वत्वविशिष्टस्य पुत्रशब्दघटकस्य यर: द्वित्वं न संभवति। वा हतजग्धयो:—वा० हत जग्धयो: सतो: पुत्रशब्दघटकपरो वा द्वित्वम्।

हत: पुत्रो यया सा पुत्रहती, जग्धे: पुत्रो यया सा पुत्रजग्धी, राजदन्तादिषुपाठात् हतजग्धयोर्परनिपात:। पुत्रहती, पुत्रजग्धी।

**त्रिप्रभृतिषु शाकटायनस्य-८/४/५०**-वर्णत्रयघटितसमुदायघटकस्याच: परस्य यरो द्वे वा न स्त:।
इन्द्र:, इन्द्र:, राष्ट्रम्, राष्ट्रम्।

**सर्वत्रशाकल्यस्य–८/४/५१**। द्वित्वं न स्यात्। अर्क:, ब्रह्मा।

**दीर्घादाचर्याणाम्**—द्वित्वं न स्यात्। **दात्रम् पात्रम् अचोरहाभ्यां द्वे–८/४/४६** अच: पराभ्यां रेफहकाराभ्यां परस्य यर: द्वे वा स्त:। हर्य्यनुभव:, हर्यनुभव:।

**हल्लो यमां यमि लोप:–८/४/६४** हल: परस्य यमो—लोप: स्यात् वा यमि। आदित्यं हवि: यमां

यमि इत्यत्र यथासंख्यसत्वे। माहात्म्यम् इत्यत्र न लोपः।

**एचोऽयवायावः ६/१/७८।** अजव्यवहितपूर्वत्वविशिष्टस्यैचः स्थाने क्रमाद् अय् अव् अय् आव् एते आदेशाः स्युः।

**तस्य लोपः। १/३/९** इत् संज्ञकसमुदायस्य लोपः स्यात्। तथा च यवयोर्लोपे न, उच्चारणसामर्थ्यात् तयोरित्संज्ञाऽपि न फलाभावात्। हरये, विष्णवे, नायकः, पावकः।

**वान्तो यि प्रत्यये-६/१/७९**— यकारदिप्रत्ययाव्यवहितपूर्वत्वविशिष्टास्यौदौतोरवावौ एतौ स्तः।

गोर्विकारो गव्यम्-गोपयसोर्यत् इति यत्।

नावा तार्यं नाव्यम्। नौ वयोधर्मेत्यादिना यत्। गोर्यूतौ छन्दसि उपसंख्यानम्-यूतिशब्दाव्यवहितपूर्वत्वविशिष्ट-स्य गोशब्दान्त्यस्य निर्दिश्यमानस्याव् आदेशः स्यात् छन्दसि।

आ नो मित्रावरुणा घृतैर्गव्यूतिमुक्षतम्।

गव्यूति=गोप्रचारभूमिः। गावः यूयन्ते मिश्रीक्रियन्ते अस्मिन् इति अधिकरणे क्तिन् प्रत्यय इति वेदभावये दीर्घश्च निपात्यते। सूत्रतः वार्तिके वान्त इत्यनुवर्त्य श्रूयमाणवान्तादेश इति लभ्यते, तस्मात् वकारो न लुप्यते। सूत्रेऽपि प्रसक्तिः। तत्रापि श्रूयमाणत्वविशिष्टवान्तादेशो भवति।

**धातोस्तन्निमित्तस्यैव-६/१/८०**

धातोरैचश्चेत् वान्तोदेशस्तदा यादिप्रत्ययनिमित्तस्यैव।

लव्यम्। अवश्यलाव्यम्।

यदि प्रत्ययनिमित्तस्यैचो वान्तादेशश्चेत् तर्हि धातोरेवेति विपरीतनियमवारणार्थं सूत्रे एवग्रहणम् ।

तान्निमित्तस्यैवैतस्य फलन्तु—ओयत अत्रायं गुणो न यदि प्रत्ययनिमित्तः किन्तु एकादेश एवेति भावः।

औयतअत्राडागमनिमित्तिका वृद्धिः। **क्षय्यजय्यौ शक्यार्थे-६/१/८१।** शक्यार्थे=शक्तिविषयीभूतार्थे=समर्थे यान्तादेशनिपातनं बोध्यम्।

क्षय्यम्—क्षि=क्षये "शकि लि ङ् च इति शक्यार्थे यत्प्रत्ययस्ततो निपातनम्।

जय्यम्। पूर्ववत् यत् प्रत्ययः।

क्षेतु योग्यं=क्षेयम्-"अर्हे कत्यतृचोश्च" इत्यर्हे यत् न तु शक्यार्थे। क्षेयं पापम् जेयं मनः।

**क्रय्यस्तदर्थे-६/१८२** तदर्थे 'क्रय्यम्' इति प्रयोक्तव्यम्। अन्यत्र तु क्रेयम्।

तस्मै इदं तदर्थम्। तत् पदेन क्रीञ द्रव्यविनिमये इति धात्वर्थो ग्राह्यः। अर्थात् द्रव्यविनिमयाय इदमिति क्रय्यम्। क्रयणार्हे तु क्रेयम् इति भावः।

**लोपः शाकल्यस्य ८/३/१९**—अवर्णपूर्वकपदान्तयकारवकारयोर्लोपः स्याद् वाऽशि। हर एहि हरयिह-लोपस्यासिद्धत्वात् न स्वरसंन्धिः। विष्णु इह विष्णविह।

श्रिया उद्यतः श्रियायुद्यतः। गुरा उत्कः। गुरावुत्कः। कानि सन्ति कौ स्तः-वाक्यसंस्कारपक्षे येन क्रमेण पदानां प्रयोगोच्छा, तेनैव क्रमेण पदानां संस्कार इति।—

किम्+जस् अस्+झि इति पूर्वं कानि कौ इति च संसाध्य ततः सन्ति, स्त इति पदं योज्यम्। अत एवाल्लोपस्य स्थानिवद्भावेन यणावादेशो प्राप्तौ न पदान्त इति निषेधात्र भवतः।

**एकः पूर्वपरयोः ६/१/८४** अधिकारोऽयम्।

**आद्गुणः ६/१/८७** आत् इति पञ्चमी, विभक्ति सम्बन्धितकारसत्वात् तपरस्तत्कालस्य सूत्रं न प्रवर्तते अन्यथा उपसर्गादृति इति ऋति इत्यत्र तपरकरणं व्यर्थं स्यात्।

अवर्णाव्यवहितोत्तरत्वशिष्टस्याचि परतः पूर्वपरयोः गुणरुपैकादेशः स्यात् संहितायाम्।

उपेन्द्रः, रमेशः गङ्गोदकम्। इन्द्रमुपगतमुपेन्द्रः। अत्यादयः क्रान्ताद्यर्थे द्वितीयया इति वार्तिकात् समासः।

रमायाः ईशः रमेशः।

गङ्गायाः उदकम्-गङ्गोदकम्।

**उरण् रपरः १/१/५१** उः स्थाने रफेनिष्ठावयवतानिरुपकः प्रसङ्गस्थायामण् भवति। ऋृस्थानिकस्य रेफपरत्वं लृस्थनिकस्य लपरत्वमिति व्यवस्थापनात् "कृष्णर्द्धिः" इत्यत्रार्। तवल्कार इत्यत्राल्। अचोरहाभ्याम् इति पाक्षिकद्वित्वे त्रिधम्।

**झरो झरिसवर्णे ८/४/६५** स्पष्टम्। द्वित्वाभावे लोपे सति एकधम्—

१. कृष्णर्धिः

असति लोपे द्वित्वलोपयोर्वा द्विधम्।

२. कृष्णर्द्धिः

सति द्वित्वे लोपे चासति त्रिधम्

३. कृष्णर्द्धिः

यणो मयो द्वे वाच्ये इति वार्तिके ककारस्य, अनचि च सूत्रेण लकारस्य द्वित्वे रुपचतुष्टय्। १. तवल्लकारः २. तवल्क्कारः ३. तवल्कारः ४. तवल्लककारः

**वृद्धिरेचि–६/१/८८**—(गुणापवादः) अवर्णाव्यवहितोत्तरत्वविशिष्ट एचि परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशः स्यात्।

कृष्णैकत्वम्—कृष्ण इति सम्बोधनान्ते प्रथमान्त पदं, पूरणगुणेत्यादिसूत्रेण षष्ठीसमासस्य निषेधात्। गङ्गौघः, देवैश्वर्यम् कृष्णौत्कण्ठ्यम्।

**एत्येधत्यूठ्सु ६/१/८९**। पररुपगुणापवादः।

अवर्णाव्यवहितोत्तरत्वविशिष्टैजाद्योः एत्येधत्यावयवेऽचि, ऊठि च परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशः स्यात्। एतिपदेन इण् धातोरेव ग्रहणं नान्यस्य। एत्येधत्योः पररुपे ऊठि च गुणे प्राप्तेऽनेन बाधः। अत्र वाह ऊठः च्छवोः शूड इति विहितस्यैव ग्रहणम् दित्यौही चमे मन्त्र वर्णनात् प्रष्ठौहः इति भाष्यप्रयोगाच्च अव+एहि इति स्थले एङि परपम् इति पररुपं- परादिवद्भावेनेङादिधातुत्वप्रयुक्तं वाधित्वा प्राप्ता च वृद्धिः एवं पूर्वान्तवद्भावेन एकारे आङत्वमाश्रित्य प्राप्तं ओमाडोश्च पररुपं न बाधते, पुरस्तादापवादन्यायेन।

उपैति, उपैधते। एजाघोः किम्—उपेतः। भाभवान् प्रेदिधत्।

**उपसर्गादृति धातौ ६/१/९** उपसर्गावयवाकाराद्धात्वयवे—ऋकारे परतः पूर्वपरयोः स्थाने वृद्धिरेकादेशः स्यात्। उपार्च्छति, प्रार्च्छति। गतेर्क्रतिधातौ इति तु न सूत्रितम् अर्च्छतीत्यादौ दोषात्।

**अन्तादिवच्च ६/१/८५** एकादेशस्य यः पूर्वस्थानी यश्चपरस्थानी तद्घटितो यः समुदायतमस्तद्वृत्तिर्ये प्रातिपदिकत्वतद्व्याप्य धर्मांक्षन्ते एकादेशविशिष्टेअष्टतिदिश्यन्ते तेन रेफस्य पदान्तत्वे-

**खरवसानयोर्विसर्जनीयः ८/३/११५**।

खरि, अवसाने च परत: रेफान्तं यत् पदं तदन्तस्य विसर्ग: स्यात्। प्राच्र्छति, उपाच्र्छति इत्यादावनेन विसर्गे प्राप्ते अन्तादिवच्चेति सूत्रादतिष्टपदत्वमादाय विसर्गविधायकशास्त्रं न प्रवर्तते, —कर्तरि चर्षि देवतयो: सूत्रघटक चर्षि निर्देशात्।

चर्षि इत्यादौ गुणस्य पदद्वयसम्बन्धिवर्णद्वयनिमित्तकत्वेनबहिरङ्गतयासिद्धत्वेन रेफस्य न विसर्ग: प्राप्त इति वाच्यम्, तथापि गुणस्येव विसर्गस्यापि वर्णद्वयनिमित्तकत्वेनबहिरङ्गत्वनिमित्तिककमितिकृत्वोभयो: समत्वमिति भाव:।

उपसर्गस्तु—जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राग्न्यतमत्वम् इति स्वीकारेण जन्यतया: जनकांशे नित्यसाङ्काक्षतया क्रियाविशेषविषयकबोधधातुजन्यतयोंपसर्गेण धातोराक्षेपो यद्यपि सिद्धस्तथापि धातुग्रहणं योगविभागद्वारा पुनर्वृद्धिंविधानार्थमिति। तेन पक्षिकोऽपि प्रकृतिभाव: पुनर्वृद्धिविधानसामर्थ्यात् न भवति।

**वा सुप्यापिशले: ६/१/९२**। अवर्णान्दुपसर्गादृकारादौ सुबन्तप्रकृतिकप्रत्ययान्तधातौ परे पूर्वपरयो: वृद्धिर्वा स्यात्। आपिशलिग्रहणं सम्मानार्थम्। प्रार्षभीयति, प्रर्षभीयति। ऋलृवर्णयो:—सावर्ण्यात् लृकारघटितधातुरपि ग्राह्यस्तेन प्राल्कारीयति प्रल्कारीयति इत्यादिसिद्धि:।

**एङि पररुपम्–६/१/९४**। अवर्णान्तोपसर्गाद् एङादौ धातौ परे पूर्वपरयो: पररुपमेकादेश: स्यात्। प्रेजते, उपोषति। ऐजृ दीप्तौ, उष दाहे वृद्धयपवाद:। वासुपि इहानुवर्त्य वाक्यभेदेन व्याख्येयमितिकेषाञ्चित् मतम् तच्चिन्त्यं भाष्येऽद्रष्टत्वात्।

(एवे चाऽनियोगे वा०) वार्तिकारम्भ एव पररुपविधायकसूत्रे धातोरनुवृतिं सूचयति। वार्तिकस्थ एवशब्दस्यार्थस्तु अन्ययोगव्यवच्छेद, अयोगव्यच्छेदश्च, तयोरन्त्येऽर्थे, (अयोगव्यच्छद) वार्तिकप्रवृत्तिरिति भाव:।

क्व भोक्ष्यसे, एवार्थ: अयोगव्यच्छेद:, तवैव-अन्ययोगवच्छेदार्थ:।

**अचोऽन्त्यादि टि**–अच इति निर्धारणे षष्ठी। तस्मात् प्रकृतेरच: समुदायोऽर्थ:। तस्य स्वघटकत्व, स्वघटकनिर्धायमाणेतरावृत्तिधर्मवत्वोभयसम्बन्धेन निर्धार्यमाणान्त्यत्वेऽन्वय:।

यद्यपि अच इत्यस्यान्यत्वान्वये, अन्त्यादि इत्यत्र समासानुपत्ति: अन्त्यशब्दस्य विशेषणसापेक्षत्वात्। तथापि अन्त्यत्वस्य नित्यसकाँक्षतया नित्यसाकाँक्षतिरिक्त पदस्यैव सापेक्षपदेनग्रहणाददोष:।

वृत्तिस्तु—अच्समुदायघटक: अन्त्य: आदिर्यस्य समुदायस्य, तादृश: समुदाय: टि संज्ञ: स्यात्। शकन्ध्वादिषु पररुपं वाच्यम् (वा०) शकादिपूर्वपदघटकेरुचि परे पूर्वपरयो: (टेरचो:) पररुपं स्यात्।

शकन्धु:, देशविशेषाणां कूप इत्यर्थ:। कर्कन्धु: राजविशेषाणां कूप:।

कुलटा-भिक्षुकीत्यर्थ: अटतीति अटा कुलस्य अटा कुलटेति सीमन्त: केशवेशे केशानामलङ्करणे सीमन् शब्दस्य टे: अन्नस्याचि परे पूर्वपरयो: पररुपं बोध्यम्। सीमन्त:=संस्कारविशेष: मनीषा, ईषा लाङ्गल दण्ड: ईष्यतेऽनयेति ईषा लक्षणया तत् सदृशस्तस्मात् बुद्धिरित्यर्थ:।

हलीषा-लाङ्गलदण्ड:।

लाङ्गलीषा—स एवार्थ:।

पतञ्जलि: पतन् अञ्जलि: यस्मिन् नमस्कार्यत्वात् कश्चिद् ऋषि:। विच्छेदस्तु पतत्+अञ्जलि:।

सारङ्गः पशुपक्षिणोः (वा०) सारङ्गः विचित्रो मृगः पशुः। मयूरी पक्षी वा, एतयोरर्थे पररुपम्। तदभिन्नबलवति मनुष्याद्यर्थे साराङ्गा। =सारो बले स्थिरौशे च न्याय्ये कृत्बोऽम्बरे त्रिषु।

मार्तण्डः—मृत+अण्डः अत्र विषये एव पररुपम्। मार्त+अण्ड केचनाहु स्तत्चिन्त्यम्। समर्थानां प्रथमाद्वेति सूत्रस्वारस्यविरोधात्।

**ओत्वोष्ठयोः** समासे वा (वा०) समासघटकाकारात् तत्समासघटके, ओत्वोष्ठयोरवयवेऽचि परे पूर्वपरयोः पररुपमेकादेशो वा स्यात्।

स्थूलश्चासौ ओतुः स्थूलोतुः स्थूलविडाल इत्यर्थः बिम्बमिवौष्ठौ अस्येति बिम्बोष्ठः। समासे किम् तवोष्ठः। यद्यपि ओतु ओष्ठपदमुद्दिश्य पररुपप्रवृत्तेः सत्वात् परिभाषाप्रवृत्तौ समासलाभः स्वत एव स्यात्, तथापि वार्तिकस्थसमासग्रहणबलात् यत्र सुबन्तत्वेन पदत्वेन वा सक्षादुदेश्यता यस्य विधेः तत्रै परिभाषाप्रवर्तत इति स्वीकारात् न क्षतिः। सूत्रे ओतु ओष्ठ इति प्रातिपदिकं गृह्यते, एतावता प्रातपदिकोद्देश्यको विधिः।

**ओमाङोश्च ६/१/९५** अवर्णाद् ओमाङोरचि परे पूर्वपरयोः पररुपमेकादेशः स्यात्।

शिवाय-ओम् नमः-ब्रह्मस्वरुपाय शिवाय नमस्कार इत्यर्थः। वृद्धि बाधित्वा पररुपम्।

शिवेहि—शिव+आ+इहि-गुणदीर्घयोः प्राप्तयोरपवादत्वात् दीर्घे शिवा+इति इति जाते, गुणेन सिद्धे सूत्रे आङ्ग्रहणं व्यर्थम् इति वाच्यम्। आङ्ग्रहणसामर्थ्यादेव, धातूपसर्गयोः कार्यमन्तरङ्गमिति ज्ञापकाददोषः। अन्तरङ्गत्वादौ गुणे शिव+एहि इत्यादौ वृद्धेः प्राप्तौ तद् बाधनार्थमाङ्ग्रहणमिति भावः।

**अव्यक्तानुकरणस्यात इतौ-६/१/९८।**

अव्यक्तकर्मकानुकृतिकर्ता योऽच्छब्दस्तत इति शब्दघटकेऽचि परे पूर्वपरयोः पररुपमेकादेशः स्यात्।

अव्यक्तं=ध्वनिः। अनुकरणमित्यत्र बाहुलकात् कर्तरि ल्युट्। अनुकरणक्रियाया अव्यक्तं कर्म। अतएव अव्यक्तस्यानुकरणमव्यक्तानुकरणमिति समासः सिद्धः। अन्यथा करणे ल्युट् स्यात् तदा उभयप्राप्तौ कर्मणि षष्ठी स्यात्। तदा कर्मणि च षष्ठी समासनिषेधः स्यात्। पटत्+इति पटिति।

एकाचो न (वा०) अव्यक्तानुकरणस्यैकाचो इतौ परे पररुपं न स्यात्। श्रदिति। श्रद्+इति। श्रदिति अव्यक्तानुकरणम्। अत्र पररुपं न भवति।

**नाम्रेडितस्यान्त्यस्य तु वा ६/१/९९।**

इतिशब्दघटकेऽचि परे पररुपं न स्यात्। अन्त्यस्य तु वा स्यात्। पटत् पटत्+इति—अत्र नित्यवीप्सयोरभावात् कथं द्वित्व् अत एवायं-

डाचि बहुलं द्वे भवतः—(वा०) बाहुलकात् द्वित्वम्। **तस्य परमाम्रेडितम्-८/१/२।** द्वित्वघटितसमुदायघटकान्त्यावयवस्याम्रेडित संज्ञा स्यात्। पटत्पटदिति।

**झलां जशोऽन्ते-८/२/३९।** अन्तग्रहणं झलिनिवृत्यर्थम्। पदस्यान्तेऽवसाने परे झलां जशः स्युः। पटत्पटदिति।

**अकः सवर्णे दीर्घः ६/१/१०।** अकः सवर्णेऽचि परे पूर्वपरयोः दीर्घरुपैकादेशः स्यात्। दैत्यारिः=विष्णुः श्रीशः=विष्णुः विष्णूदयः=विष्णोः प्राकट्यम्। अचि किम्-कुमारी शेते।

दीर्घेकारशकारयोः सावर्ण्यनिषेधः नाज्झलौ सूत्रेणाप्राप्तः निषेधशास्त्रीयबोधे ग्रहणकशास्त्रस्यासिद्धेः। अकः किम्—हरये। अकोऽकि दीर्घः इत्येव सूत्रं सुवचम् यथासंख्येन दध्यत्र इत्यत्र निर्वाहः सम्भवति।

ऋति ऋ वा (वार्तिकभाष्ये) वार्तिकेन रेफद्वयघटित ऋकार: द्विमात्रिकश्च विधीयते। लृकमारोऽपि तथैव। अत एव विवृतप्रयत्नकस्य लृकारस्य दीर्घो भवतीति। वार्तिकेन विधीमानस्य इत्यस्य दीर्घ: स्यादेव ईषत् स्पृष्टप्रयत्नस्य सत्वात्।

लृति लृ वा (वा०) स्पष्टम्। होतृकार:। होत्लृकार:। **एङ: पदान्तादति–६.११.०९** पदान्तदेङोऽति परे—पूर्वपरयो: स्थाने पूर्वस्थानिसजातीय: एकादेश: स्यात्। हरेऽव विष्णोऽव।

◆

**सन्दर्भा:**

१. कण्ठादिषु सभाागेषु उर्ध्वभागेनिष्पन्नोऽजुदात्तसंज्ञ: स्यात् आ ये।

२. कण्ठादिषु सभागेष्वधोभागनिष्पन्नोऽचनुदात्तसंज्ञ: स्यात्। (अर्वाङ)

   * *तालुन: आदि: ताल्वादि: तालुर्आदिर्येषां तानि ताल्वादीने ताल्वादिश्च ताल्वादीन च ताल्वादि, इति केचिदाहु तत्र षष्ठीतत्पुरुषे विध्यभावात् गौरवाच्च हेयम्।*

३. संज्ञी

४. संज्ञा

५. तन्त्रेण निर्देश:।

६. स्वमारयोऽर्थ:-यदर्थतात्पर्येण यत्पदमुत्त्चार्यते स तस्यात्मीयोऽर्थ:

७. रुपं स्वरुपमिति, आनुपूर्वीति यावत्।

८. येने इति करणे तृतीया, विधि: इत्यत्र भावे किं प्रत्यय:। तथा च यत्करणकं विधानं तत्तदन्तरस्य बोधकम्। आचार्यपाणिनि: आ धात्री: यतं विधन्ने। अत अचा करणम् करणं व्यापारवत् क्रियां जनकं भवति अची इत्यय इतख्यावर्तकत्वरुपव्यापार:, इतख्या वर्तकत्वरुपव्यापार वत् विशेषणमेव भवति, तस्मादेव विशेषणेत्यस्य लाभ:, तच्चाभेदेनैव।

९. तद्शब्दार्थमाह—समुदायेति।

◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 35-40

# नादविन्दूपनिषदि योगतत्त्वविमर्शः

प्रो. उमारानी त्रिपाठी

भारतीयदर्शने प्रायेण सर्वेष्वेव सम्प्रदायेषु योगविद्या विशेषेण समाद्रियते। यद्यपि अस्याः सैद्धान्तिकं स्वरूपं महर्षिपतञ्जलिकृते योगसूत्रमित्याख्ये ग्रन्थे विशदत्वेन समुपवृंहितं दृश्यते; किन्तु अस्याः मूलं तु बीजत्वेन वैदिकवाङ्मये दरीदृश्यते। उपनिषदः वेदस्य मथितार्थभूताः।। तत्र तत्त्वज्ञानोपायभूतस्य योगस्य समुल्लेखः प्राचुर्येण समुपलभ्यते। व्याकरणदृष्ट्या युज् समाधौ धातोः घञ् प्रत्यये कृते सति 'योग' शब्दः निष्पद्यते। तल्लक्षणं तु योगसूत्रे–'योगश्चित्तवृत्तिनिरोधः (१/२)' अर्थात् चित्तवृत्तीनां निरोधः निग्रहः लयो वा योग उच्यते।[१] कठोपनिषदि[२] निगदितमिदं यत्–

**तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम्।**
**अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ।।**

उल्लेखनीयमिदं यद्योगशास्त्रप्रवर्तकेन योगीश्वरेण शिवेन मनोलयकृते सपादलक्षसाधनानि निर्दिष्टनि। तदुल्लेखः योगतारावल्यां प्राप्यते। तत्र नादयोगः यस्तु नादविन्दूपनिषदि प्रतिपादितः महत्तमः वर्तते। योगसाम्राज्यमिच्छता योगिनां कृते नादानुसन्धानमेव वरेण्यम्।[३] उक्तं हि शिवसंहिताग्रन्थे–

**नासनं सिद्धसदृशं न कुम्भकसमं बलम्।**
**न खेचरीसमामुद्रा न नादसदृशो लयः।।**[४]

शोधपत्रमिदं 'नादबिन्दूपनिषदि योगतत्त्वविमर्शः' इत्याख्य विषयमधिकृत्य प्रस्तूयते। तत्रादौ समुल्लेख्यमिदं यद्।

ऋग्वेदीयेयं नादविन्दूपनिषद् अद्वयात्मैक्यप्रतिपादने पर्यवसितं दृश्यते। अत्र ब्रह्मात्मैक्यानुसन्धाने साधनभूतः नादयोगः प्रकाशितः। नादयोगस्यानुशीलनेन परिज्ञायते यदिदं योगतत्त्वं तु प्रणवात्मकमेव अर्थात् नादसाधनया शब्दब्रह्मात्मैक्यं हि नादयोगस्यस्वरूपं वर्तते।[५] वेदेषु बहुधा प्रणवात्मैक्यप्रतिपादनं दृश्यते।[६] यथा ओ३म् इति परमात्मवाचकः शब्दः कथ्यते। उक्तं हि कठोपनिषदि–

**एतद्ध्येयवाक्षरं ब्रह्म एतद्धेवाक्षरं परम्।**
**एतद्धयेवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत्।।**[७]

अत्रैव अखिलवेदस्य सारभूतं तत्त्वं संग्रहेण ओम इति पदेन सूचितम्।

**सर्वे वेदा यत्पदमामनन्ति तपांसि सर्वाणि च यद्वदन्ति।**[८]
**यदिच्छन्तो ब्रह्मचर्यं चरन्ति तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत्।।**

* संस्कृत विभागा, म०गां० काशी विद्यपीठ, वाराणसी।

**एतदालम्बनं श्रेष्ठमेतदालम्बनं परम्।**
**एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते।।**[९]

मन्त्रेऽस्मिन् ओंकारसाधनाया: महत्त्वं प्रतिपादितम्। अत्र शब्दब्रह्मावबोधेन परब्रह्मोपलब्धि: सुनिश्चितं परिज्ञायते। न केवलं औपनिषद्वाङ्मये प्रत्युत पातञ्जलयोगसूत्रेऽपि प्रोक्तमिदं यत्–

**''तस्य वाचक: प्रणव:।''** (यो०सू० १/२७)

**''तज्जपस्तदर्थभावनम्''** (यो०सू० १/२८)

अत्र सूत्रद्वये प्रणवात्मनो: वाच्यवाचकत्वमभिधाय समाधिलाभाय तन्महत्त्वप्रतिपादितं वर्तते।[१०] अन्यासूपनिषत्सु ''ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोङ्कार एव'' इत्यादिभिमन्त्रै: प्रणवात्मैक्यं प्रतिपादितम्।[११]

उल्लेखनीयमिदं नादविन्दूपनिषदि प्रतिपाद्यत्वेन नादयोगस्तु ज्योतिर्मय: शिव:। अतएव अत्र ओङ्कार-ब्रह्म-हंसरूपेण उपास्य:। उपनिषदादावेव हंसरूपकद्वारा ओम् इत्यस्य निरुक्ति: क्रियते प्रणवात्मकस्य हंसस्य अकार: दक्षिण: पक्ष:, उकारस्तु उत्तरपक्ष:। मकारस्तु पुच्छमिति। अर्धमात्रा तु मस्तकम्। तत्र गुणास्तु पादादिकं तस्य।[१२] धर्मोऽस्य ब्रह्मण: दक्षिणं नेत्रम् अधर्मोऽपरं वामनेत्रमिति कल्पितम्।[१३] सकललोकानामधिष्ठानत्वात् ब्रह्मणि सकललोकं प्रतिष्ठितं वर्तते। यथा—भूर्लोक: तत्पादयो: भुवर्लोकस्तु जानुनि, सुवर्लोक: कटिस्थाने महर्जगत् नाभिप्रदेशेऽवस्थित: जनो लोकस्तु तद्हृदयदेशे, कण्ठे लोकस्तप: भ्रुवोर्ललाटमध्ये तु सत्यलोको व्यवस्थितो वर्तते। अत्र श्रुतिप्रमाणं दर्शयति—

**सहस्राक्ष्यं वियतावस्य पक्षौ हरेर्हंसस्य पतत: स्वर्गम्।**
**स देवान् सर्वानुरस्य यदद्य सम्पश्यन् याति भुवनानि पश्य।।**[१४]

अतएव प्रणवहंससमारूढ: हंसयोगविचक्षण: पुरुष: पापकोटिशतैरपि कर्मचारै: न भिद्यते निस्सङ्गत्वात्।[१५]

अत्रोपनिषदि ओमित्यक्षरस्य अ, उ, म् इति प्रत्येक वर्णे देवतावर्णनं क्रियते। अक्षरेऽस्मिन् अकारस्य प्रथमा मात्रा आग्नेयी अस्ति। सा वह्निरूपाकारा वर्तते तदधिष्ठातृदेवता अग्नि:। द्वितीया मात्रा उकाररूपा वायव्या तदधिष्ठातृदेवता वायु:। ततश्च मकार संज्ञका उत्तरमात्रा, यदधिष्ठातृदेवता सूर्य:। तदत्र तुरीया अर्धमात्रा तु वारुणी कथ्यते, तदधिष्ठातृदेवता वरुण:।[१६(क)] एतच्चतृसषु मात्रासु एकैका कलात्रयमुखाकृति: अतएव द्वादशकलात्मको ओङ्कार: प्रकीर्तित:। तत्सर्वं धारणाध्यान समाधिसाधनै: जिज्ञासितव्यमिति[१६] एतासु द्वादशकलासु प्रथमा मात्रा घोषिणी इत्यभिहिता। द्वितीया तु विद्युन्मालेति। तृतीया पतङ्गी, चतुर्थी च वायुवेगिनी निगद्यते। पञ्चमी नामधेया, षष्ठी च ऐन्द्री व्युच्यते। सप्तमी तु वैष्णवी विज्ञेया, अष्टमी च शाङ्करीति निगद्यते। नवमी कला महतीति, दशमी च धृति संज्ञिता। एकादशी कला तु मौनी, द्वादशी च ब्राह्मी परेति प्रसिद्धा वर्तते।[१७] अत्रोक्तमिदं यत ओङ्कारोपासनानिरतानां विविधमात्रास्ववस्थितानामुपासकानं तत्र-तत्रावस्थासु प्राणवियोगे सति फलश्रुति: वर्तते। यथा—प्रथमायां कलायां प्राणान्ते सति साधक: सार्वभौम: सम्राट् रूपेण जायते लोके। द्वितीयायां तु प्राणोत्क्रमणे सति महिमाशाली यक्ष: भवति। तृतीयायां कलायां प्राणवियोगेसति विद्याधरो, चतुर्थदशायां च गन्धर्वो भवति। पञ्चमदशायां प्राणोत्क्रमणे सति 'तुषित' इत्यभिधेयै: देवैस्सह निवसन् चन्द्रलोके महीयते। षष्ठदशायां तु गतप्राण: देवेन्द्रसायुज्यं प्राप्नोति। सप्तमदशायां विष्णो: परमं पदमवाप्नोति अष्टम्यां च भगवत: शिवस्य सामीप्यमधिगच्छति। नवम्यां महर्लोकं दशम्यां च जनं लोकं व्रजति। एकादश्यां तपोलोकं, द्वादश्यां तु शश्वद्ब्रह्मलोके महीयते।[१८]

एतदनन्तरं ओङ्कारोपासकः शाश्वतं शुद्धं विभुं परमात्मानमश्नुते। नादविन्दूपनिषदि प्रोक्तमिदम्—

**ततः परतरं शुद्धं व्यापकं निर्मलं शिवम्।**
**सदोदितं परं ब्रह्म ज्योतिषामुदयो यतः।।**
**अतीन्द्रियं गुणातीतं मनोलीनं यदा भवेत्।**
**अनूपमं शिवं शान्तं योगयुक्तं सदा विशेत्।।**
**तद्युक्तस्तन्मयो जन्तुः शनैर्मुञ्चेत्कलेवरम्।**
**संस्थितो योगचारेण सर्वसङ्गविवर्जितः।।**
**ततो विलीनपाशोऽसौ विमलः कमलाप्रभुः।**
**तेनैव ब्रह्मभावेन परमानन्दमश्नुते।।**[१९]

एषु श्लाकेषु ओङ्कारब्रह्माधिगमनेन परब्रह्मस्वरूपसाक्षात्कारवर्णनं विद्यते। यथोक्तं ब्रह्मविन्दूपनिषदि–

**द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत्।**
**शब्दब्रह्मणि निष्णातः परब्रह्माधिगच्छति।।**[२०]

अत्रोल्लेखनीयमिदं यत् प्रणवोच्चारणं तु नादात्मकमेव भवति। अस्माद्हेतोः नादविन्दूपनिषदि नादयोगानुसन्धानं अनिवार्यतया समुपदिष्टं वर्तते। अत्रोक्तमिदं यद्—

**ब्रह्मप्रणवसन्धानं नादो ज्योतिर्मयः शिवः।**
**स्वयमाविर्भवेदात्मा मेघापायेंऽशुभानिव।।**[२१]

अर्थात् शब्दब्रह्मानुसन्धानं तु साक्षात् ज्योतिस्वरूपः शिव एव। अनेन स्वात्मभूतं परमतत्त्वं मेघापाये सूर्य इव प्रकाशते। नादयोगस्यास्यानुसन्धानकृते साधकः सिद्धासने संस्थितो भूत्वा वैष्णवीम्[२२] मुद्रां धारयन् एकाग्रचित्तो निजे दक्षिणे कर्णे नादं शृणुयात्।[२३] दृढाभ्यासेन नादोऽयं बाह्यध्वनिमावृणुते। ततश्च साधकः एकं पक्षं अकारात्मकं जित्वा अपरं पक्षं यत्तूकारं तदपि जयेत्। एवंक्रमेण च निखिलं प्रणवं विजित्य तुरीयं ब्रह्मपदमाविशेत्।[२४]

प्रश्नोऽयमुदेति यदस्य नादयोगस्य साधनप्रक्रिया कीदृशी, किञ्च तत्प्रयोजनम्? एवं विधानां प्रश्नानं निराकरणमत्रैव कृतं वर्तते। समुल्लेख्यमिदं यत् बाह्यनादस्तु नोदनेन प्रेरणया वाविर्भवति, अतः आहत संज्ञको भवति; किन्तु दिव्यप्रकृतिप्रेरणया सहजोऽन्तर्नादः अनाहत एव। अयं तु एकाग्रचित्तेन संश्रव्यः वर्तते। नादयोगस्य साधनाकाले कृताभ्यासः साधकः नानाप्रकारकाः शब्दाः शृणोति। ततः अभ्यासपाटवात् सूक्ष्मात्सूक्ष्मतराः शब्दाः शृणोति। ततः अभ्यासपाटवात् सूक्ष्मात्सूक्ष्मतराः शब्दाः श्रूयन्ते। तत्रादौ जलधिजलजभेरीनिर्झरमृदङ्गघण्टा पटहध्वनिखि ध्वनिः श्रूयते; किन्तु शनैः शनैः परिक्व दशायां किङ्किणिवेणुवीणाभ्रमरस्वनसदृशध्वनिः मधुरं मधुरं श्रूयते। यथोक्तम्—

**श्रूयते प्रथमाभ्यासे नादो नानाविधो महान्।**
**वर्धमाने तथाभ्यासे श्रूयते सूक्ष्मसूक्ष्मतः।।**
**आदौ जलधिजीमूतभेरी निर्झरसम्भवः।**
**मध्ये मर्दलशब्दाभो घण्टाकाहलजस्तथा।।**
**अन्ते तु किङ्किणीवंशीवीणाभ्रमरनिःस्वनः।**

**इति नानाविधाः नादाः श्रूयन्ते सूक्ष्मसूक्ष्मतः।।**[२५]

अत्रावधेयमिदं यत् महति महाभेर्यादिकध्वनौ श्रूयमाणे सति सूक्ष्मात् सूक्ष्मतरं नादमेव परामृशेत्।[२६] पुनश्च, घनमुत्सृज्य वा सूक्ष्मे, सूक्ष्ममुत्सृज्य वा घने नादे रममाणमपि क्षिप्तं मनः अन्यत्र (बाह्यविषयंप्रति) न विचालयेत्।[२९] यत्र कुत्रापि वा नादे प्रथमं मनः लगति, तत्र-तत्र स्थिरीभूत्वा तेन नादेन सार्धं विलीयते। ततश्च, स्थिरं मनः सकलं वाह्यं जगत् विस्मृत्य नादे दुग्धाम्बुवद् एकीभूय सहसा चिदाकाशे विलीयते।[२८] उक्तमिदम्—

**उदासीनस्ततो भूत्वा सदाभ्यासेन संयमी।**
**उन्मनीकारकं सद्यो नादमेवावधारयेत्।।**
**सर्वचिन्तां समुत्सृज्य सर्वचेष्टाविवर्जितः।**
**नादमेवानुसन्दध्यान्नादे चित्तं विलीयते।।**[२९]

तदवस्थायां यथा मधुकरः मकरन्दं पिबन् पुष्पगन्धान्नापेक्षते तथैव सदैव नादासक्तं चेतः विषयसुखं नो काङ्क्षते।[३०] अपरदृष्टान्तद्वारा स्पष्टीक्रियते–चितभुजङ्गः नादासक्तः नादपरिग्रहणतः सुनादगन्धेन निजचापलं परित्यज्य विश्वममुं विस्मृत्य एकाग्रः कुत्रचिन्न धावति।[३१]

अत्रोपनिषदि समुल्लिखितमिदं यद् विषयोद्यानसञ्चारिणे मनोमत्तगजेन्द्राय निशिताङ्कुश इव नियामनसमर्थोऽयं नादयोगः।[३२] पुनश्चोच्यते, मनः सारङ्गस्य बन्धनकृते समर्थोऽयं नादयोगः, अन्तरङ्गसमुद्रस्य रोधे नादोऽयं वेलायते अर्थात् कूलमिवाचरति।[३३]

वस्तुतः ब्रह्मप्रणवसंलग्नः नादोऽयं ज्योतिर्मयात्मक एव।[३४] तत्र मनः लयमेति तदेव विष्णोः परमं पदं वर्तते।[३५] इत्थं स्पष्टं परिज्ञायते यन्नादयोगस्यापि परमं प्रयोजनं तत्त्वसाक्षात्कारपूर्वकं भवबन्धनिवृत्तिरेव वर्तते।

ध्यातव्यमिदं यद् यावदुच्चारणं श्रवणं च शब्दानां प्रचलति तावदेव आकाशस्य सङ्कल्पो भवति। निःशब्दे सति तत्परब्रह्म परमात्मैवानुभूयते।[३६] अतएव यावन्नादः तावदेव मनः। नादस्य सूक्ष्मात् सूक्ष्मतरेण मनः अमनीभावत्वं व्रजति।[३७] सशब्दो नादः अक्षरे ब्रह्मणि प्रणवे लयमेति, तदा निश्शब्दभूतः नाद एव परमं पदमुच्यते।[३८]

एवंप्रकारेण अभ्यासनैरन्तर्येण अनुसन्धनीयमानो नादः साधकस्य कोटिजन्मार्जितसञ्चितक्रियमाणकर्मबन्धनं निश्शृणाति तदनन्तरं सकलवासनाजालाः संक्षयं यान्ति। एवं सति निरञ्जने निष्कले शुद्धे परमतत्त्वे प्राणादिभिः सह मनः विलीयते। तत्र ब्रह्मप्रणवनादे नादकोटि सहस्राणि विन्दुकोटि शतानि च सर्वे विलयं यान्ति।[३९]

तदेवं नादयोगानुसन्धानेन ब्रह्मप्रणवनादे लीनं मनः उन्मनीभूय छिन्नमूलमिव भवति। अतएव साधकः अभ्यासनिवृत्तौ सति सर्वास्ववस्थासु विनिर्मुक्तः सर्वचिन्ताविवर्जितः जाग्रदाद्यवस्थात्रयाभिमानं विहाय समाधिदशायां मानापमानादिद्वन्द्वातीतः सन् योगी भवति।

इत्थमुपरिविन्यस्तसाक्ष्यालोके स्पष्टं ज्ञायते यननादयोगः प्रणवात्मयोग एव। अनेनानुसन्धानेन आत्मसाक्षात्कारः भवति। तत्त्वज्ञानेनैव व अविद्याबन्धनिवृत्तिपूर्वकं मोक्ष उपलभ्यते।

◆

**सन्दर्भाः**


१. कठ०उ० २/३/११

२. शिवसंहिता

३. सर्वचिन्तां परित्यज्य सावधानेन चेतसा।
नाद एवानुसन्धेयो योगसाम्राज्यमिच्छता।। वाराहो० २/८३

४. शिवसंहिताग्रन्थे

५. गुदमवष्टभ्याधाराद्वायुमुत्थाप्य स्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकं गत्वा अनाहतमतिक्रम्य विशुद्धौ प्राणान्निरुध्य आज्ञामनुध्यायनब्रह्मरन्ध्रं ध्यायन् त्रिमात्रोऽहमित्येवं सर्वदा ध्यायन्नथो नादमाराधाराद्ब्रह्मरन्ध्रपर्यन्तं शुद्धस्फटिकसंकाशं स वै ब्रह्म परमात्मेत्युच्यते।'' (हंसोपनिषद्) प्रथममन्त्रः तथा अन्यत्रापि दृश्यते। यथा विज्ञानभैरव इत्याख्ये शेवागमग्रन्थेऽपि प्रणवोच्चारणं नादात्मकमेव अनुभूय 'शब्दब्रह्मणि निष्णातः पब्रह्माधिगच्छति' अभिहितम्। द्र० विज्ञानभैरव ३८,३९

६. तैत्ति०उ० ओमिति ब्रह्म। ओमितीदं सर्वम्। तै०उ० १/७/१
''ओमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानम्' द्र० माण्डू०उ० १-१२
ओमित्येतदक्षरमुद्गीथमुपसीत। ओङ्कार एवेदं सर्वम्' छा०उ० १/१/१—३
एतद्वै सत्यकाम परं चाऽपरं च बह्म यदोङ्कारः। प्र०उ० ५/२
एवमोङ्कार आत्मैव संविशत्यात्मनाऽऽत्मानं, य एवं वेद।' नृ०उ० २/१०
योऽसौ परापरो देवो ओङ्कारो नाम नमतः।
निः शब्दः शून्यभूतस्तु मूर्ध्नि स्थाने तोऽभ्यसेत्।। म०उ० ६/२३
प्रायेण सर्वासूपनिषत्सु ओङ्कारमहत्त्वं प्रतिपादितं वर्तते।

७. क०उ० १/२/१६।

८. क०उ० १/२/१५।

९. तत्रैव १/२/१७।

१०. यो०सू० १/२९

११. द्र० माण्डूक्योपनिष्द् १-१२
मै०उ० ६/४, श्रीमद्भगवद्गीता ८ड११-१३
छा०उ० १/४/४, श्वे०उ० ४/८, छा०उ० २/२३/३।
ध्यानविन्दू प०-९, बृ०उ० ३/८/८, ९, अथर्वशिखोप० १/१०
नृ०पू० २/५, अथर्वशिरोप०-४४, प्र०उ० ५/१

१२. नादविन्दू० १

१३. तत्रैव २-४

१४. (क) तत्रैव ५
(ख) कल्याण उपनिषदङ्क नादविन्दूपनिषद पृ० ६९४

१५. एवमेतां समारूढः हंसयोगविचलक्षणः।
न भिद्यते कर्मचारैः पापकोटिशतैरपि।

१६. (क) नादविन्दू० ६-७
(ख) नादविन्दू० ८

१७. नादविन्दू० ९-११

१८. तत्रैव १२-१६

१९. तत्रैव १७-२०

२०. ब्रह्मविन्दूपनिषद् १७

२१. नादविन्दूप०-३०

२२. (१) अङ्गुष्ठाभ्यामुभेश्रोत्रे तर्जनीभ्यां द्विलोचने।

नासारन्ध्रे च मध्यमाभ्यामनाभ्यां च मुखदृढम्।। शिवसंहिता ३५-३६

२२. (२) अन्तर्लक्ष्यं बहिर्दृष्टिर्निमेषोन्मेषवर्जिता।
एषा सावैष्णवीमुद्रा सर्वतन्त्रेषु गोपिता।।

२३. नादविन्दू० ३१

२४. तत्रैव ३२

२५. तत्रैव ३३-३५

२६. नाद वि० ३६

२७. नाद विन्दू ३७

२८. तत्रैव ३८-३९

२९. तत्रैव ४०-४१

३०. तत्रैव ४२

३१. तत्रैव ४३

३२. तत्रैव ४४-४५

३३. तत्रैव ४६

३४. तत्रैव ४६

३५. तत्रैव ४७

३६. निःशब्दं तत्परं ब्रह्मपरमात्मा समीयते।
नादो यावन्मनस्तावन्नादान्तेऽपि मनोन्मनी।। नाद०वि० ४८
तुलनीय–
प्रणवादिसमुच्चारात् प्लुतान्ते शून्यभावनात्।
शन्यया परया शक्त्या शून्यतामेति भैरवि।। वि०भै० ३९

◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 41-44

# बौद्धतान्त्रिकानन्दचतुष्टयविमर्शः

**डॉ. धर्मदत्तचतुर्वेदी***

जगतां दुःखहानार्थं प्रयतमानमास्ते बौद्धदर्शनतन्त्रवाङ्मयं नितरां निजोदयकालादेव। बौद्धदृष्ट्या दुःखोन्मुक्तिमन्तरेण नानुभवितुं शक्यते कीदृशोऽप्यानन्दः। जगदिदं यावद् दुखःसत्यंतां नोररीकरिष्यति तावत्सुखानन्दोपलब्धिर्न सम्भाव्यते। जीवस्य जागतिकदुःखानुबद्धत्वं जन्मकालादेव। जीवोऽयं वराको वैवश्येन वृथा दुःखेऽपि सुखमनुभवन् दृश्यते। दुःखगोपनेन कृत्रिमसुखप्रकाशनेन च न वास्तविकानन्दोपलब्धिर्जायतां कस्यापि। यावद् जगद्दुःखानुबद्धत्वं तावन्न सुखानन्दानुभवित्वम्। तस्मादेव भगवता बुद्धेन चतुरार्यसत्यानि प्रकाशितानि यानि निजतपोजन्यफलपरकाणि दृश्यन्ते तानि नूनमद्य स्वीकरणीयानि। कस्यापि धर्मविशेषस्य सिद्धान्तश्चेत् चारितार्थ्यमुपयाति तदा स च यथायथमभिनन्दनीयः स्वीकरणीयश्च। जगदिदं दुःखमयं जन्म चापि दुःखं मृत्युश्चापि तथा। सांसारिकदुःखसत्यताहेतुत्वेन रागमोहद्वेषतृष्णादयो विश्वसमाजेन वेदितव्या एव। एत एवानन्दप्राप्तौ बाधका अभ्युपगमनीया निरोद्धव्या बुद्धोपदिष्टतृतीयार्यसत्येन निरोधाख्येन। तन्निरोधोपायत्वेन चतुर्थार्यसत्याष्टाङ्गमार्गो निरदेशि भगवता बुद्धेन। अष्टाङ्गमार्गस्त्वानन्दं नितरां वर्षति दुःखानि चोपशमयति। अश्वघोषो बौद्धमहाकविश्चतुरार्यसत्यानि निजसौन्दरनन्दमहाकाव्ये पद्येनानेनं निरूपयति—

**बाधात्मकं दुःखमिदं प्रसक्तं दुःखस्य हेतुः प्रभवात्मकोऽयम्।**
**दुःखक्षयो निःसरणात्मकोऽयं त्राणात्मकोऽयं प्रशमाय मार्गः।।[१]**

एतावतो महीयान् नापरः कश्चिन्महामन्त्र आनन्दप्रापको वेद्यः। बौद्धधर्मेण भ्रामं भ्रामं जागतिकदुःखान्यनुभूय तानि च समुन्मूलयितुं भूयस्तर्कोक्तिभिः सप्रमाणं प्रायत्यत। सर्वलौकिकवासनाप्रहाणायैव सद्धर्म उपादेशि बुद्धेन यथा—

**सर्वदृष्टिप्रहाणाय यः सद्धर्ममदेशयत्।**
**अनुकम्पामुपादाय तं नमस्यामि गौतमम्।।[२]**

आनन्दानुभवो बौद्धदृष्ट्या करुणोद्भावे वेद्यते। बौद्धधर्ममूलभूतत्वेन करुणाऽवतिष्ठते। चित्तस्य द्रवीकरणं सक्रियाऽवस्था च करुणोच्यते। दुःखं करुणालम्बनत्वेन स्वीकार्य्यम्। करुणाभ्यासादेव दुःखनिवृत्तिः सौख्योपलब्धिश्च जयते। करुणोत्पादो हि बौद्धधर्मस्य प्रमुखं कार्य्यम्। कारुण्याभावे कुत आनन्दानुभूतिः। कारुणिकेन बुद्धेन कस्यापि दुःखं सोढुं न शक्यते। बुद्ध एव तादृशो महापुरुषो यो हि महाकरुणयाऽन्वितः सर्वप्राणिनां दुःखोन्मुक्तिभारमुवोढ। बुद्धो बहुजनसुखाय बहुजनहिताय निजधर्मपत्नीं पुत्रं च जहौ। अश्वघोषपदावल्यां बुद्धोक्तिर्यथा—

* संस्कृतविभागाध्यक्षः, केन्द्रीयतिब्बतीअध्ययनविश्वविद्यालयः, सारनाथः, वाराणसी.

**बोधाय जातोऽस्मि जगद्धितार्थमन्त्या भवोत्पत्तिरियं ममेति।**[३]

जगत्कल्याणाय बुद्धत्वप्राप्तेरावश्यकत्वं प्रतिभाति। बुद्धत्वप्राप्तिरेव महासुखं महानन्दश्च। जन्मजरादिगतदु:खोन्मुक्त्यै बुद्धधर्म एव शरणं प्रतिभाति। बुद्धधर्मे तदर्थं चित्तरक्षायै बोधिचित्तोत्पादाय च सत्त्व: प्रयतेत। आनन्दानुभूतिश्चित्तरक्षणादेव लब्धुं शक्या। बोधिचित्ततात्पर्यं हि कारुण्ये चित्तनिवेशनम्। बोधिचित्तोत्पादे जाते सति कारुण्यमनुभूयते। कारुण्यवशादेव वयं संवेदनशीला भवितुं शक्नुम:। कठोरदुष्टचित्तेन नानन्दानुभूति: कर्तुं शक्यते। अन्यजनानां दु:खोत्पाटने बौद्धधर्म आनन्दमनुभवति न च निजदु:खनिवारणे। महायानी साधक: स्वतो मुक्तिं निर्वाणं वा नेहते यावत् सकलप्राणिनां महासुखं न सम्पद्येत।

बौद्धधर्मे मिथ्याच्छलाडम्बराणां मनागपि स्थानं नास्ति। अद्य वृथा वाक्पाटवमिथ्याप्रपञ्चैर्यद् भौतिकं सुखं लभ्यते तद् बौद्धदृष्ट्या दु:खमेवास्ते। दु:खाद् निर्गन्तुकामो जन: दु:खमेवानुधावति। यत्स्वसुखं तच्छत्रुवद् वयं हन्म:। यथोक्तं शान्तिदेवाचार्येण—

**दु:खमेवाभिधावन्ति दु:खानि:सरणाशया:।**
**सुखेच्छयैव सम्मोहात् स्वसुखं घ्नन्ति शत्रुवत्।।**[४]

बौद्धधर्मे शत्रुभावस्य निवारणोपायोऽपि दृश्यते। शत्रवो गगनाकारा इव व्याप्ता:। कियत: शत्रून् को व्यापादयेत् क्रोधचित्तस्य नाशेन चैकोऽपि शत्रुर्नावशिष्यते। यथा—

**कियतो मारयिष्यामि दुर्जनान् गगनोपमान्।**
**मारिते क्रोधचित्ते तु मारिता: सर्वशत्रव:।।**

बौद्धधर्मे चित्तरत्नमेव जगदानन्दबीजभूतं प्रतिष्ठते। चित्तमालिन्येन चित्तप्रमादेन च सुखानुभूतिर्न सम्भवेत्। चित्तरक्षणादेवानन्दोपलब्धिरनुभवनीया। तस्माच्चित्तरत्नमेवानन्दबीजं तदेव च सर्वव्याधिदु:खौषधं यथा चोक्तं—

**जगदानन्दबीजस्य जगद्दु:खौषधस्य च।**
**चित्तरत्नस्य यत्पुण्यं तत्कथं हि प्रमीयताम्।।**

चित्तरत्नं सर्वपुण्यप्रापकं जागतिकदोषापसारकं सर्वविधानन्दमूलबीजं दु:खरोगौषधमिदम्। बौद्धसाधक: परहिताय बोधिचित्तमुत्पादयति। परहितादेवानन्दोपलब्धिर्जायते। बौद्धधर्मे स्वार्थसिद्धेर्निजानन्दानुभूतेश्च स्थानं न वरीवर्ति। परार्थसुखप्रवृत्तस्य बोधिसत्त्वस्य परदु:खनिवारणेनैव सुखानन्दानुभव:। बोधिचित्तस्य पुण्येन समं किमप्यन्यत्पुण्यं नास्ति।

बौद्धधर्मे भिक्षव: परार्थहितसम्पादनाय चारिकां कुर्वाणा विलोक्यन्ते। परार्थकरणमेवानन्दस्वरूपम्। यथा विनयपिटके बुद्ध उपादिशद् भिक्षुसङ्घम् - ''चरथ भिक्खवे चारिकं बहुजनहिताय बहुजनसुखाय लोकानुकम्पाय अत्थाय हिताय सुखाय देवमनुस्सानं।''

प्रत्येकं बुद्धवचनमित्थं जगदानन्दवर्षकं सुखशान्तिविधायकं दु:खार्णवप्रतारकं प्रतिभाति। आनन्दप्राप्तिर्मानुष्यनौकया सम्भाव्यते—

**मानुष्यं नावमासाद्य तर दु:खमहार्णवम्।**
**मूढ कालो न निद्राया इयं नौर्दुर्लभा पुन:।।**

यदा मानवो निजजीवनं महत्त्वाधायकमवगच्छेत् तदैव स विशालचित्तो दयार्द्रहृदय: परहितावहो

भवितुमर्हति। जीवनेनानेन परहितञ्चेन्न सम्पादितन्तदा पुनरत्रागमः कुतः?—

**यदि नात्र विचिन्त्यते हितं पुनरप्येष समागमः कुतः।**

चित्तवशीकरणादेव परहितमेतन्मानवजीवनस्य च सार्थक्यं प्रतिभाति। बौद्धधर्मः कायवाक्चित्तविशुद्धया कायानन्द-वागानन्द-चित्तानन्दानुभूतिं जनयति।

आनन्दप्राप्त्यै गुह्यं सर्वस्वभूतं बुद्धधर्मविशिष्टं धर्मसारभूतं भावनीयं नान्यः कश्चित्पन्थाः। बोधिचित्तमेव शरणमानन्दप्राप्त्यै—

**दुःखं हन्तुं सुखं प्राप्तुं ये भ्रमन्ति मुधाम्बरे।**
**यैरेतद् धर्मसर्वस्वं बुद्धं गुह्यं न भावितम्।।**[५]

द्वेषशल्ये हृदि स्थिते नानन्दानुभूतिर्न च सुखम्। यथोक्तम्—

**मनः शमं न गृह्णाति न प्रीतिसुखमश्नुते।**
**न निद्रां न धृतिं याति द्वेषशल्ये हृदि स्थिते।।**[६]

प्राप्तपुररस्कारान् लाभाँश्चापि परिजहाति चित्तरक्षात्वेन बौद्धसाधक इति। तथ्यमपि ध्येयमास्ते सर्वसाधारणानाम्। केचित् साहित्याकादमीपुरस्कारानिह वर्षे भारतीयजनतापार्टीशासने परावर्त्तयन् निजसम्मानहेतवे। चित्तविशुद्धयैवानन्दमनुभवितुं शक्नुमो वयम्। यथोक्तम्—

**लाभा नश्यन्तु मे कामं सत्कारः कायजीवितम्।**
**नश्यत्वन्यच्च कुशलं मा तु चित्तं कदाचन।।**[७]

चित्तपुण्यमपि समुपेक्षते पापेभ्यश्चित्तं पातुं साधकस्तत्र। चित्तदोषादेव समुत्पद्यन्ते पापानि। पापचित्तेन कोऽपि मोदयितुं न शक्यते समाजे। तस्मात् पापचित्तं परिहेयमेव। विश्वस्मिन्नपि विश्व आतङ्कवादोऽयं क्रोधचित्तस्य परिणामभूतो विलोक्यते। क्रुद्धा आतङ्कवादिनः कियत्कालं मानवान् छेत्स्यन्ति, शुण्डिकया च मारयिष्यन्ति। एकदा ते श्रान्ता निजक्रोधं वारयिष्यन्त्येव। क्रोधेन कदापि नानन्दानुभूतिर्न च लोकसौख्यं सम्भाव्यते। क्रोधचित्ते निवार्यमाणे सर्वत्र हर्षो वर्षति शान्तिश्च प्रसरति। बौद्धसाधकः क्रोधचित्तं दमयितुं प्रयतते शत्रवो गगनोपमास्ते साकल्येन नाशयितुं न शक्यन्ते—

**कियतो मारयिष्यामि दुर्जनान् गगनोपमान्।**
**मारिते क्रोधचित्ते तु मारिताः सर्वशत्रवः।।**

बौद्धतन्त्रविद्याऽपि सकलदुष्प्रवृत्तिं वारयितुमानन्दचतुष्टयं निर्दिशन्ती दृश्यते। आनन्द-परमानन्द-विरमानन्द-सहजानन्दचतुष्टयं यथा—

**प्रथमानन्दमात्रं तु परमानन्दं द्विसंख्यतः।**
**तृतीयं विरमाख्यं च चतुर्थं सहजं स्मृतम्।।**
**एवं श्रुत्वा तु वै सर्वे वज्रगर्भादयो बुधाः।**
**परमविस्मयामापन्ना मूर्च्छिताः पतितावनौ।।**
**प्रथमानन्दं जगद्रूपं परमानन्दं जगत् तथा।**
**विरमानन्दं जगच्चैव विद्यते सहजं त्रिषु।।**[८]

अत्र कस्मिन्नानन्दे का प्रक्रिया? तत्समाधानं हि—

**आनन्देन सुखं किञ्चित् परमानन्दं ततोऽधिकम्।**
**विरमेन विरागः स्यात् सहजानन्दं च शेषतः।।**
**प्रथमं स्पर्शाकांक्षया द्वितीयं सुखवाञ्छया।**
**तृतीयं रागनाशत्वात् चतुर्थं तेन भाव्यते।।**
**परमानन्दं भवं प्रोक्तं निर्वाणं च विरागतः।**
**प्रथमानन्दमात्रं तु सहजमेभिर्विवर्जितम्।।**[९]

अत्र आनन्दपरमानन्दविरमानन्दत्रयं जागतिकं, सहजानन्दस्तु विलक्षणः कश्चित्। परमानन्दे साधको जगति रागमुपैति विरमानन्द च फलं नश्यति। बोधिचित्तानन्दो हि सहजानन्दे समुपलभ्यते। मेघवदाच्छन्नो मायास्वप्नप्रजागरोपमावस्थाभिर्युज्यते सहजानन्दः। मेघाच्छन्नचन्द्रवदानन्दोऽसौ भाति। भगवता बुद्धेनैकस्मिन् वज्रदेह आनन्दचतुष्टयमेतद् व्यभावि। प्रथमानन्दे चतुर्दशोष्णीषपद्मनि मध्यतो षोडशदलीयललाटकमलमध्ये शुक्रं पतति। नन्दाभद्राजयारिक्तापूर्णाख्यपञ्चकलाभिर्युक्तं शुक्रमायात्यत्र। वैचित्र्यानुभूतिर्यथा—

**विचित्रे प्रथमानन्दः परमानन्दो विपाकजे।**
**विरमानन्दो विमर्दे च सहजानन्दो विलक्षणे।।**[१०]

**१. आनन्दः -** वज्रयानानुरोधेन तान्त्रिकः प्रथमाभिषेकं लभते यदा तदा योगी पयोधराभिषिक्तबालवदनुभवति। ततः कमलमध्यभागे चेषद्वज्रोद्वेलनेन बोधिचित्तं पतति। ततः शुक्रस्यामृतधारायां षोडशदलीयललाटे कमलकर्णिकान्तं कायानन्दवागानन्दचित्तानन्दज्ञानानन्दभेदेन चातुर्विध्यमानन्दस्यास्य। एवं क्रमेणावशिष्टानन्दत्रयं चतुर्विधं सत् साकल्येन षोडशप्रकारकं जायते। प्रथमानन्दो वीरस्वभावके प्रज्ञाचुम्बनमात्रकः।

**२. परमानन्दः -** आनन्दमात्रापेक्षया परमानन्दे साधको विशेषसुखमनुभवन्नास्ते। अयं योगिनीस्वभावकः स्पर्शसुखेच्छावाञ्जायते सुखानन्दं हि विशेषेण जनयत्ययम्। परमानन्दोऽत्र संसारत्वेन दृश्यते। द्वात्रिंशद्दलीयकरकमलेन अष्टदलीयहृदयकमलस्य कर्णिकाफलान्तं परमानन्दोऽसौ कायवाक्चित्तज्ञानभेदेन चतुर्विधो जायते। प्रौढगुह्याभिषेकोऽसावानन्दः। प्रथमानन्दे कामो विक्षोभयति मनः द्वितीये चात्र तस्य परिपूर्णतैव। पूर्णावस्थेयं ललाटे यत्र बोधिचित्तं पूर्णतामति। अत्रालिङ्गनं हि प्रज्ञया। दशम्यां तिथौ पूर्णपरमानन्दक्षयः साधकस्य। वाण्याऽत्रानन्दानुभूतिर्यथाऽमृतकणिकायाम्—

**पद्मे वज्रप्रवेशेन परमानन्दक्षणः वाक्समयः।**[११]

**३. विरमानन्दः -** विरमानन्दोऽसौ जागतिक एव। चतुष्षष्टिदलगतनाभिकमलेन द्वात्रिंशद्दलीयगुह्यकमले शुक्रव्याप्तिरेव विरमानन्दः। नात्र सौख्यविरतिरपितु गाढालिङ्गनं सीत्कारः कण्ठकूजनं नाभिपर्यन्तं जायते। आनन्दादस्मादेव निर्वाणं लभ्यते। अस्मादेव रागावरोधो विधीयते। एतस्यापि क्षणभेदेन पूर्ववच्चातुर्विंश्यमवबोधव्यम्। अत्रोत्तमाङ्गेन प्रज्वलिता तीव्रज्वाला मैथुनावधौ सबिन्दुं पतति। या हि चन्द्रं द्रवीकृत्य विरमानन्दं जनयति। धर्मकायत्वेन विपरिणमते बुद्धोऽत्र। एतत्स्वरूपं हि अमृतकणिकायां यथा—

**अहो ज्ञातमहो ज्ञातमहो ज्ञातमिदं स्फुटम्।**
**इत्याभोगपरं चित्तं विरमानन्दमात्रकम्।।**[१२]

अस्मिन्नेव ग्रन्थे परिभाषान्तरं चापि—

**सुखविकल्पया विशिष्टत्वाद् विरागः विरमानन्दः।**[१३]

पूर्णिमा ह्येतदानन्दतिथिः।

**४. सहजानन्दः -** हेवज्रतन्त्रे विलक्षणानुभवात्मकः सहजानन्दोऽभिधीयते। सर्वोत्तमोऽसावानन्दः। अत्र शुक्रबिन्दुपतनावधौ कायवाक्चित्तबिन्दूनामवसाने बिन्दुचतुष्टयपतनकाले सहजानन्दोऽनुभूयते। नासौ जागतिकस्तस्मात् सहजः। यथोक्तं हेवज्रजन्त्रे—

**सहजात्यां यदुत्पन्नं सहजं तत् प्रकीर्तितम्।**
**सहभावं सहजं प्रोक्तं सर्वाकारैकसंवरम्।।**[१४]

पूर्णिमान्ते षोडशीकलैव सहजानन्दः। ललाटहृदयगुह्ये शुक्रागमनेन गुह्याद् वज्रमणिं यावत् सहजानन्दक्षणः। कृष्णपक्षीयप्रतिपत्तिथौ शुक्रं पतति सर्वधातवश्चात्र समह्रियन्ते। वज्रमणौ बोधिचित्तागमनेन सहजानन्दक्षणो विज्ञायते। बोधिचित्तमिदं शून्यताकरुणाऽभिन्नमेव। सहजात्यां समुत्पन्नत्वात् सहजानन्दः। अस्यापि पूर्ववत् चातुर्विध्यं विज्ञेयम्। आनन्दोऽसौ महासुख-निर्विकल्प-आकांक्षालक्षणसुखागारात्मकः। अयमेवाग्रणीर्मन्तव्यः सर्वानन्दे। यथोक्तममृतकर्णिकायाम्—

**निर्विकल्पमहासौख्य आकाङ्क्षालक्षणार्थकः।**
**आनन्दोऽसौ सुखागारद्वारदेहलिकोपमः।।**
**अहो सौख्यं महासौख्यमहो भुञ्जे कथं कथम्।**
**इत्याकाङ्क्षापरं चित्तं स आनन्दोऽग्रणीरिव।।**[१५]

महामुद्रानुरागतोऽसौ चतुर्थ आनन्दः। अत्र ज्ञानवज्रे शुक्रच्युतावस्था हि द्वादशवर्षाणि नारीणां षोडशवर्षाणि पुरुषाणाम्। गगनप्रतिबिम्बभूता महामुद्रा। सर्वधर्माणां प्रकृतेः सहजत्वात् सहजानन्दो जायते। प्रज्ञा सहजतया विज्ञायतेऽत्र। न रागो न विरागोऽत्र। सहाजानन्द एव सम्बोधिः। अस्य सौख्यं मैत्री, देवी च वज्रदेवी, माता महाशून्यता। वज्रदेवीस्वरूपं यथा—

**सदैव सहजानन्दां नित्यभूतां सर्वालयाम्।**
**रणच्चरणनूपुर्यां वन्दे नृत्यपरम्पराम्।।**[१६]

◆

## सन्दर्भाः


१. सौन्दरनन्द - १६-४.
२. मूलमाध्यमिककारिका २७-३०.
३. बुद्धचरितम् प्रथमसर्ग.
४. बोधिचर्यावतार - १-२८.
५. बोधिचर्यावतार - ५.१७.
६. बोधिचर्यावतार - ६.३.
७. बोधिचर्यावतार - ५.२८.
८. हेवज्रतन्त्रम् - दशम पटल - १३, १४, १५.
९. हेवज्रतन्त्रम् - अष्टम पटल, मुक्तावली टीका- पृ. ८१.
१०. दोहाकोश- व्याख्या पृ. ६८.
११. अमृतकणिका पृ. ६५.
१२. अमृतकणिका पृ. २३.
१३. अमृतकणिका पृ. २३.
१४. हेवज्रतन्त्रम् पृ. १२५.
१५. अमृतकणिका पृ. २२.
१६. बौद्धस्तोत्रसंग्रह - पृ. २०३, संकलनकर्ता पं. जनार्दन पाण्डेय, मोतीलाल बनारसीदास वाराणसी-१९९४.


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 46-51

# आगमदर्शनसमीक्षिताः केचन महेश्वरविशेषाः

**सिद्धिदात्री भारद्वाज***

भूरिभर्गो भगवान् महेश्वरः परमार्थतः एकः सन्नपि सर्वस्वरूपो भवन् भाति। अतुलनीयं किल अस्य स्वात्ममहेश्वरस्य विलसत्यैश्वर्यम्। विश्वोत्तीर्णं यदस्य रूपं तदनुपमेयं तु अस्त्येव, विश्वमयं स्वरूपमत्येतदीयं चेतोहरं षट्त्रिंशत्-तत्त्वमयमाभाति। षट्त्रिंशत्-तत्त्वानां याः सन्ति अधिष्ठातृदेवतास्तासु भासमाना ईश्वरता, महेश्वरस्य ऐश्वर्यलवमात्रमेवावलम्बते। सर्वैश्वर्यशालिनो महेश्वरस्यानुग्रहेणैव ब्रह्मादिषु तदीयं लवात्मकमैश्वर्यमवतरति। चिद्रूपस्य महेश्वरस्यबलं प्रथते तदीया निरतिशयिता सम्पद्विभूतिः भगवती शिवा देवी स्वातन्त्र्यापरपर्याया विमर्शशक्तिः। आगमरहस्यार्थवेदिनः शक्तिमेनां महेश्वरस्य स्वभावमाहुः। मायागर्भे यानि त्रिंशततत्त्वानि समुल्लसन्ति तत्र ब्रह्मा विष्णुः रुद्रो वा अधिष्ठातृदेवतारूपः सन् ईश्वर इत्युच्यते। तमेनम् अशुद्धाध्वनियामकमाहुः शास्त्रकृतः। या तु महामाया मायातत्त्वादूर्ध्वं राजमाना तत्र विद्यातत्त्वस्य अधिष्ठातृदेवता मन्त्रसंज्ञकः ईश्वरो विद्यते। तद्वत् ईश्वरतत्त्वस्य अधिष्ठातृदेवता मन्त्रेश्वरसंज्ञकः अथ च सदाशिवतत्त्वस्य अधिष्ठातृदेवता मन्त्रमहेश्वरसंज्ञकः सुतरां देदीप्यते। ईश्वरपदवाच्याः त्रयोऽपीमे शुद्धाशुद्धाध्ववर्तितत्त्वानां नियामकाः भवन्ति। तदूर्ध्ववर्तिनः सदाशिवतत्त्वस्य शक्तितत्त्वस्य शिवतत्त्वस्य चाधिष्ठातृदेवता श्रीसदाशिवो भगवान् देवी शक्तिः शिवश्च देवः ईश्वरपदवेदनीयतामर्हन्ति। एतेषां शुद्धाध्ववर्तितत्त्वानां नियामकत्वं ब्रुवते सुधियः शिवयोगिनः। तदेवं विश्वमयस्य षट्त्रिंशत तत्त्वव्रातस्य अधिष्ठातृदेवतारूपः ब्रह्मादिः शिवान्तः ईश्वरपदेन कामम् अभिधीयताम् परमेषु महेश्वरस्य यदैश्वर्यं तदीयां विप्रुड् एव विलसति। सर्वविधानन्तैश्वर्यसारविलसितस्तु भगवान् महेश्वर एव विश्वोत्तीर्णः प्रत्यभिज्ञासुप्रापः साधकान् अस्मान् कृतार्थयेन्नान्यः। यदुक्तम्–

**ते तु यदीयैश्वर्यविप्रुड्भिरीश्वरीभूताः स भगवाननवच्छिन्नप्रकाशानन्दस्वातन्त्र्यपरमार्थो महेश्वरः।** इति[१]

समुच्छलत्स्पन्दशक्तिकस्य चिदानन्दसंप्लुतस्य संविन्महेश्वरस्य स्वात्मनस्तु घटादिवत् एकरूपेण वपुषा नियन्त्रितां स्थितिं नो मन्वते तावदागम-स्वाध्यायशालिनः श्रीभगवद्भावभाविता महीयांसः। नियन्त्रिता स्थितिरभविष्यदस्य चेद् अत्यक्ष्यदसौ महेश्वरत्वं संवित्त्वं वा। विश्वोत्तीर्णतात्मिकां स्थितिमत्यजतः अच्युतस्थितेः महेश्वरस्य स्फुरत्ताबलेन नित्योदिता सृष्टिधर्मिता जागर्ति ययाऽसौ लीलां नाटयन् विश्वात्मतयाप्यवभासते। तत एव त्वेनं महेश्वरसंज्ञया योजयति परमशिवं माहेश्वरः।

युदुक्तम्—**अस्थास्यदेकरूपेण वपुषा चेन्महेश्वरः। महेश्वरत्वं संवित्त्वं तदत्यक्ष्यद् घटादिवत्।।**[२]

महति आगमशास्त्रे श्रीमद्भगवद्गीताख्ये यदाह भगवान् 'मत्तः स्मृतिर्ज्ञानमपोहनं चेति'[३] तदनुसारं भर्तरि

---

* असिस्टेंट प्रोफेसर, संस्कृत-विभाग, कला संकाय, काशी हिन्दू विश्वविद्यालय, वाराणसी।

महेश्वरे स्वच्छस्वच्छन्दा चिन्मयी शक्तिः प्रभवति ज्ञानस्मृत्यपोहनशक्तीनां संयोजने वियोजने विश्रमणे तिरस्करणे प्रथने च। स्वातन्त्र्यविजृम्भितस्य महादेवस्य भुक्तिमुक्तिप्रदता शास्त्रेषु जेगीयते। सोपानत्रये या सृष्टिः यो वा संहारः सर्वत्र महेश्वरस्यैव प्रशास्तृता भोक्तृता च वरीवर्ति।

तदेतदुक्तम्—**उपद्रष्टानुमन्ता च भर्ता भोक्ता महेश्वरः। परमात्मेति चाप्युक्तो देहेस्मिन् पुरुषः परः।।** इति[४]

**योऽसौ सर्वगतो देवः सर्वष्वन्तर्गतो विभुः। सिद्धिमुक्तिप्रदाताऽसौ.....**
**यस्मात् तस्मात् सदा देवि यष्टव्यो भावभेदतः।।** इति[५]
**अशेषभुवनाधारमण्डमप्सु प्रलीयते।**
**ततः कालाग्निरुद्रश्च कालतत्त्वे लयं व्रजेत्।।**
**अप्तत्त्वात्तु समारभ्य यावन्मायान्तगोचरम्।**
**तदूर्ध्वे शुद्धमध्वानं यावच्छक्त्यन्तगोचरम्।।**
**तत्सर्वं संहरेद् घोरमघोरो घोरनाशनः।**
**त्रिष्वेवं संस्थितो रुद्रः कालरूपी महेश्वरः।।** इति[६]

स्वात्ममहेश्वरस्यास्य पराहन्ताविश्रान्तिलक्षणः पूर्णो विमर्शः अहमित्येव विजृम्भते। त्रिशक्तिरेकशक्तिरनन्तशक्तिर्वा शक्तिमान्महेश्वरो सकलं जगत् शक्तिरूपतया स्वस्वभावत्वेन परमृशति। यदुक्तं सर्वमङ्गलागमे—

**शक्तिश्च शक्तिमांश्चैव पदार्थद्वयमुच्यते।**
**शक्तयोऽस्य जगत्सर्वं शक्तिमांस्तु महेश्वरः।।** इति[७]

सोऽयं महेश्वरः परमशिवः 'अतत्त्वमिति मन्यन्ते तत्त्वमेवाविचारितम्–इति[८] नयेन तत्त्वमिति अतत्त्वमिति वा जेगीयमानं परमं तत्त्वं विलसति। अतएव साधककर्तृकः अतत्त्वपरिहार इव तत्त्वपरिग्रहोऽपि नितरामुपहस्यते। यदुक्तम्–

**यद्यतत्त्वपरिहारपूर्वकं तत्त्वमेषि तदतत्त्वमेव हि।**
**किन्त्वतत्त्वमथ तत्त्वमेव वा तत् त्वमेव ननु तत्त्वमीदृशम्।।**[९]
**यथा स्थितस्तथैवास्व मा गा बाह्यमथान्तरम्।**
**केवलं चिद्विकासेन विकारनिकराञ्जहि।।** इति च[१०]

परिपूर्णसंविदात्मनि महेश्वरे चित्प्रकाशविमर्शसामरस्यमुल्लसति। महेश्वरस्यैव प्रकाशप्राधान्ये शिवशब्देन व्यपदेशः, विमर्शप्राधान्ये तु शक्तिरिति शब्देन व्यपदेशः शास्त्रकृद्भिः समाद्रियते। स्वप्रकाशस्य संविन्महेश्वरस्य प्रकाशान्तरापेक्षा न भवति। न च ततो व्यतिरिच्यमानं किमपि प्रकाशान्तरं विद्यते।

अपरिच्छिन्नस्य संविन्महेश्वरः नियता नास्त्याकृतिः, देशः कालो वा न नियतस्तस्य। सर्वाकारवतः निराकारस्वरूपस्यास्य व्याप्यव्यापकात्मनः स्वातन्त्र्येण प्रकाशमानता शैवागमदर्शनेषु युक्त्यनुभूत्यादिना प्रतिपादिता। यथोक्तम्—

**न च प्रकाशान्तरं किञ्चिदस्तीति स्वतन्त्र एकः प्रकाशः स्वातन्त्र्यादेव च देशकालाकारावच्छेदविरहाद् व्यापको नित्यः सर्वाकारनिराकारस्वभावः।** इति[११]

सर्वमिदं विश्वम् अक्रमेण अहम्भावेन पूर्णेन अहमित्येवं परामृशतः अविकल्पस्य प्रभोः अविकल्पलता नापैति। तदेतत् सुनिपुणं विशदयन्ति शास्त्रकृतो गान्धिकदृष्टान्तेन। तद्यथा–

**यथा गान्धिकः अनन्तगन्धद्रव्यसौगन्ध्यमियत्तया अनवधारयन् अक्रमेण सर्वमवधारयन् आस्ते तथा विश्वान् भावान् देशकालक्रमशून्यान् वाच्यवाचकात्मनः पश्यन्नविकल्पः शिवो भवति अहमित्येवं पूर्णाहम्भावेनैषां प्रकाशनात्।** इति[१२]

स्वशक्तेः प्रसरेण जगदुदयं संकोचने संकोचेन तु जगल्लयं प्रकुर्वन् महेश्वरः सर्वभावप्रवृत्तिहेतुः समेषामस्माकं स्वात्मा विद्योतते। शक्तिमतोऽस्य सर्वेषामात्मनः निरवच्छिन्नं स्वातन्त्र्यं विलसति। सततमसौ यद् अशिवरुपसंसारमोहमपनयति अथ चानन्दसारं भोगम् अपवर्गं च कल्याणमयं वितरति।

तदयं शिव इत्याख्यायते। आभ्यन्तरे बाह्ये वा जगति सूक्ष्मतया कारणकारणं परमशिवः सर्वदा यत्स्थितः तदसौ व्यापक इत्युच्यते। सृष्ट्यादिकृत्येषु ब्रह्मादीन् प्रेरयन्त्यां पराशवतौ (स्वमहिम्नि) अभेदसारतया सुप्रतिष्ठो नामैष भगवान् महेश्वरः। यदुक्तम्—

**सर्वेषां कारणानां च कर्तृभूता व्यवस्थिता।**
**बिभर्त्यण्डान्यनेकानि शिवेन समधिष्ठिता।।**
**तत्रारूढस्तु कुरुते शिवः परमकारणम्।**
**सृष्टिस्थितिसमाहारं तिरोभावमनुग्रहम्।।**
**हेतुकर्ता महेशानः सर्वकारणकारणम्। इति[१३]**
**एवं सर्वगतो देवः शिवः परमकारणम्।**
**व्याप्य देवि! जगत्सर्वं व्योमसु व्योमवत् स्थितः।। इति[१४]**
**स्वशक्त्या भासितानन्तविश्वः स परमेश्वरः। इति[१५]**
**शक्तिप्रसरसंकोचनिबद्धावुदयव्ययौ।**
**यस्यात्मा स शिवो ज्ञेयः सर्वभावप्रवर्तकः।। इति[१६]**
**अशिवरूपसांसारिकमोहापहस्तनयोगादानन्दसारभोगापवर्ग-**
**रूप-परापरश्रेयःपरमार्थतया शिवः परमेश्वरः। इत च[१७]**

सोऽयं शिवः सर्वथा अभेदस्वरूपोऽपि सन् न कश्चन भेदः यद्रूपो न भवति। शिवस्य न कश्चन आदिः न वाऽस्य क्वापि भवेदन्तस्तत एवायमुच्यते अनादिरनन्तश्चेति। योऽयम् अनादिरनन्तश्च परमेश्वरः स विश्वोत्तीर्ण इत्युदीर्यते।

व्यवहारपदे स एवानादिः शिव उमापतिर्भगवानिति कथ्यते। स्वात्ममहेश्वरं साक्षात्कुर्वतः साधकस्य सादिशिव इत्येतदभिधानं युज्यते। उपाधिसम्पर्कविधूननेन इत्येतदभिधानं युज्यते। उपाधिसम्पर्कविधूनेन पुनः सादिशिवः शिवैकधनतामुपैति। यदुक्तम्-यथा भेदेऽनादिसिद्धाच्छिवान्मुक्तशिवाह्यधः। तथा सांसिद्धिकज्ञानादाहृतज्ञानिनोऽधमाः।। इति[१८]

**भेदा अपि तदात्मकाः, अतएव तदनन्तकं**
**भिन्नार्थसद्भावे सति अन्तः स्यात् तद्रूपानाक्रमणात्।। इति च।[१९]**

साधकः शिवभावनाभ्यासपरायणः शिवस्य अवस्थापञ्चकं विभावयति। जाग्रत् स्वप्नः सुषुप्तिः तुर्यं

तुर्यातीतं चेति भगवतः पञ्चावस्था भान्ति। तत्र पञ्चसु कृत्येषु अधिकारवान् शिवः क्रियाशक्तिमयीं जाग्रदवस्थां तनुते। सोऽयम् पञ्चकृत्याधिकारस्य अन्तर्लीनां दृष्टिं ज्ञानशक्तिमयीं स्वप्नावस्थां चिनोति। यस्तु ज्ञानक्रियाप्रेरयितृत्वं शिवस्य सा तस्य इच्छाशक्तिः तद्रूपां सुषुप्तिमाकलयति तार्तीयां स्थितम् एष शिवः। अथ निवृत्तायामिच्छायां या आनन्दशक्तिरुद्रिक्ता भाति सैषा प्रभोस्तुर्या शक्तिर्विभाति। या पुनःअन्तरतमचिद्रूपता तत्स्वरूपे स्वस्मिन् यो निष्ठातिशयः सैवेयं प्रोच्यते तुर्यातीतावस्थां ततश्चेदं निष्कर्षकथनमुदेति—क्रियाशक्तिविमर्शः जाग्रत्, ज्ञानशक्तिविमर्शः स्वप्नः, इच्छाशक्तिविमर्शः सुषुप्तिः, निवृत्तिशक्तिविमर्शः तुर्यम्।

चिच्छक्तिविमशेस्तु प्रभोः तुर्यातीतमुच्यते। किं बहुना जगति यत्किञ्चन वस्तु तत्सर्वं भगवतः शक्तौ बीजरूपेण स्थितं विद्यते। न हि किञ्चिदपि सम्भवति यत् तदीयशक्तौ स्थितं न भवेत्। यदुक्तम्–

**एकत्रापि प्रभौ पूर्णे चित्तुर्यातीतमुच्यते।**
**आनन्दस्तुर्यमिच्छैव बीजभूमिः सुषुप्तता।।**
**ज्ञानशक्तिः स्वप्न उक्तः क्रियाशक्तिस्तु जागृतिः।**
**न चैवमुपचारः स्यात् सर्वं तत्रैव वस्तुतः।। इति**[२०]
**व्यापारादाधिपत्याच्च तद्धान्या प्रेरकत्वतः।**
**इच्छानिवृत्तेः स्वस्थत्वादभिन्नमपि पञ्चधा।। इति**[२१]
**सव्यापारधिपत्वेन तद्धीनप्रेरकत्वतः।**
**इच्छानिवृत्तेः स्वस्थत्वाच्छिव एकोऽपि पञ्चधा।।** इति च[२२]

प्रकाशात्मा स्वात्ममहेश्वरः अनन्तमाहात्म्यो देदीप्यते। अनन्तमहिम्नो महेश्वरस्य या अनवच्छिन्नप्रकाशरूपता सा विश्वोत्तीर्णता उदीर्यते। या तदीया विश्वावभासनलीला सैव प्रोच्यते शिवता शक्तिसमाख्या। परमेश्वरस्य स्वविमर्शशक्त्या स्वस्मिन्नेवानारतं विश्वसृष्टि-स्थिति-संहारादिकं नाटयतः स्वच्छता अनावृतता अनन्तरूपता च विलसति। निजरसाश्यानतया शिव एव शक्तिनररूपतयापि प्रथते।

षट्सु रूपेषु विततः शिवः तान्त्रिकैः अनुष्ठीयमानासु साधनासु समुपास्यते। सततं स्फुरद्रूपस्य निर्वृतचिद्रूपस्य विभुरूपस्य अप्रतिघातीच्छाप्रसरस्य प्रसरज्ज्ञानक्रियाशक्तिकस्य शिवस्य लिङ्गास्थण्डिलादिजडवस्तुष्वपि क्रियमाणा उपासना फलत्येव सदा। यदुक्तम्—

**भुवनं विग्रहो ज्योतिः खं शब्दो मन्त्र एव च।**
**बिन्दुनादादिसम्भिन्नः षड्विधः शिव उच्यते।। इति**[२३]
**बिन्दुर्नादस्तथा व्योम मन्त्रो भुवनविग्रहौ।**
**षड्वस्त्वात्मा शिवो ध्येयः फलभेदेन साधकैः।। इति**[२४]
**आत्मैव सर्वभावेषु स्फुरन्निर्वृतचिद्विभुः।**
**अनिरुद्धेच्छाप्रसरः प्रसरद्-दृक्क्रियः शिवः।। इति**[२५]
**तथा वेद्यस्वभावोऽपि वस्तुतो न शिवात्मताम्।**
**कोऽपि भावः प्रोज्झतीति सत्यं तद्भावना फलेत्।। इति**[२६]
**न खल्वेष शिवः शान्तो नाम कश्चिद् विभेदवान्।**
**सर्वेतराध्वव्यावृत्तो घटतुल्योऽस्ति कुत्रचित्।।**

**महाप्रकाशरूपा हि येयं संविद् विजृम्भते।**
**स शिवः शिवतैवास्यवैश्वरूप्यावभासिता।। इति च**[२७]

स्वतन्त्रस्यास्य एकस्य सतो महेश्वरस्य सर्वंसहायाः विमर्शशक्तेः महिम्ना परिपूर्णशिवताभिधाना महेश्वरता चकास्ति। स्वशक्त्या स्वरूपानधिकमपि क्रममसौ यथा भासयति तथा अभेदऽपि स्वरूपे भेदमप्याभासयति। चिदात्मा महेश्वरः अन्तःस्थितम् अर्थजातं स्वेच्छया नितान्तं स्वच्छया अन्तःकरणकवेद्यतया अन्तर्बहिरुभयकरणवेद्यतया वा स्वैरं भासयति। स्वयमेवासौ महेश्वरः सुरमानुषपशुपादपप्रभृतिविविधरूपतया भासते। सदैव प्रमातृभावतोऽविच्युतः स्वप्रकाशो भात्येष सर्वस्वरूपः शिवः सर्वस्य सर्वानुभवितृतया एकत्वेन प्रथते। यदुक्तम्—

**चिदात्मैव हि देवोऽन्तः स्थितमिच्छावशाद् बहिः।**
**योगीव निरुपादानमर्थजातं प्रकाशयेत्।। इति**[२८]
**शिवस्य परिपूर्णस्य स्वतन्त्रस्य विभोर्यतः।**
**कः कर्ता क्षोभकः को वा तस्मादद्वैतता शिवे।। इति**[२९]
**स्वरूपानधिकस्यापि क्रमस्य स्वस्वभावतः।**
**स्वातन्त्र्याद् भासनं स्याच्चेत् किमन्यद् ब्रूमहे वयम्।।**
**इत्थं श्रीशिव एवैकः कर्तेति परिभावयते। इति**[३०]
**स्वतन्त्रता च चिन्मात्रवपुषः परमेशितुः। इति**[३१]
**शिवः प्रमाता नो मेयो ह्यन्याधीनप्रकाशता।**
**मेयता सा न तत्रास्ति स्वप्रकाशो ह्यसौ प्रभुः।। इति**[३२]
**यान्युक्तानि पुराण्यमूनि विविधैर्भेदैर्यदेष्वन्वितं**
**रूपं भाति परं प्रकाशनिबिडं देवः स एकः शिवः।।**[३३] **इति च।**

श्रीसद्गुरुदर्शितप्रत्यभिज्ञापन्थानमारूढेन साधकेन आस्वाद्यमानरसस्यनिरतिशयैश्वर्यमहिम्नः शिवस्य स्वात्मतया प्रथनं परममुपर्थाय कल्पेतेति साम्मुख्यसौख्यैकलब्ध्यै शिवस्मृतिमभिनन्दयन्ती भक्तिप्रियं साम्बं शिवं श्रीकाशीविश्वेशं नमामि–

**त्वय्येव भातः स्मृतिविस्मृती ते द्वयोरपि त्वं स्वयमेव भासि।**
**तथापि साम्मुख्यसुखप्रदासौ स्मृतिः प्रिया मे नहि विस्मृतिस्ते।।**
**रागद्वेषान्धकारोऽपि येषां भक्तित्विषा जितः।**
**तेषां महीयसामग्रे कतमे ज्ञानशालिनः।।**

◆

**सन्दर्भाः :**


१. ईश्वरप्रत्यभिज्ञाविमर्शिनी, खं.-१, पृ.-१३
२. श्रीतन्त्रालोकः, आह्निकम् ३/१०१
३. श्रीमद्भगवद्गीता १५/१५
४. श्रीद्भगवद्गीता १३/२२
५. नेत्रतन्त्रम् १६/२५-२६

६. स्वच्छन्दतन्त्रम् ११/२८०-२८२
७. उद्धृतम्, परमार्थसारविवृतिः, पृ०-१०
८. वाक्यपदीयवचनमेतत्
९. श्रीपूर्णताप्रत्यभिज्ञाकारिका, १२६१
१०. तदेव १/२५७
११. तन्त्रसारः, पृ०-६
१२. शिवदृष्टिवृत्तिः, पृ०-१३४
१३. स्वच्छन्दतन्त्रम् १०/५८-५९
१४. तदेव ११/३६
१५. तन्त्रवटधानिका १/९
१६. उद्धृतम्, स्पन्दप्रदीपिका, पृ०-९
१७. ईश्वरप्रत्यभिज्ञाविवृतिविमर्शिनी, खं-१, पृ०-७
१८. श्रीतन्त्रालोकः, आहिनकम् ४/७४
१९. शिवदृष्टिवृत्तिः, पृ०-३५
२०. श्रीतन्त्रालोकः, आह्निकम्--१०/२९९-३००
२१. तदेव १०/३०९
२२. मालिनीविजयोत्तरतन्त्रम् २/३४
२३. श्रीत० आ० १/६३
२४. उद्धृतम्, श्रीत०वि०, खं०-१, पृ०-१००
२५. शिवदृष्टिः १/२
२६. श्रीत०आ० १०/१२०
२७. तदेव १५/२६४-२६५
२८. ईश्वरप्रत्यभिज्ञाकारिका १/५/७
२९. नेत्रतन्त्रम् २१/४१
३०. श्रीत०आ० ९/२०-२१
३१. तदेव ९/९
३२. तदेव १०/११३
३३. श्रीतन्त्रालोकः आह्निकम्-९/१

◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 52-56

# ऋग्वेदे नारीणामधिकारः

डॉ० माधवीशुक्ला *

ऋग्वेदस्य विविधेषु सूक्तेषु समुपलभ्यमानानां नारीसन्दर्भाणामध्ययनेन प्रतीयते यत् ऋग्वेदे वर्णिता नारीणां स्थितिः महनीया अतिगौरवमयी चास्ति। पुत्री-वधू-स्वसृ-मातृप्रभृतीनि नारीरूपाणि यथायथं विश्लिष्य पृथक्-पृथक् पर्यालोचनमर्हन्ति। ऋग्वेदे अविवाहितायाः पुत्र्याः कृते सर्वाधिकरूपेण शब्दद्वयं प्रयुक्तमस्ति-कन्या दुहिता च। 'योषित्' शब्दः कुमार्याः अर्थे एकत्र प्रयुक्तोऽस्ति[१]। यद्यपि पुत्र्यपेक्षया पुत्रस्य अधिकं महत्त्वमासीत् किन्तु कुत्रापि पुत्र्याः कृते निन्दापरकम् उपेक्षापरकं वा वचनं नोपलभ्यते। यतो हि पुत्रवत् पुत्र्या-पि वेदाध्ययनेऽधिकार आसीत्। पुत्र्याः विवाहेऽपि कापि समस्या नासीत्, सा स्ववरवरणे स्वतन्त्रा चासीत् अत्रायं मन्त्रो द्रष्टव्यः—

**कियती योषा मर्यतो वधूयोः परिप्रीता पन्यसा वार्येण।**
**भद्रा वधूर्भवति यत् सुपेशाः स्वयं सा मित्रं वनुते जने चित्॥**

स्वयंवरप्रथापि तदानीं प्रचलिताऽऽसीत्। विधवात्वमपि तथा भयावहं नासीत्। अश्विनोः स्तुतिपरकेभ्यो मन्त्रेभ्योऽयं संकेतो लभ्यते यत् देवरेण सह पुनर्विवाहो नियोगो विहित आसीत्।[४]। वध्रिमत्याः पतिः नपुंसक आसीत्, किन्तु सा अश्विभ्यां सह नियोगसंबन्धेन हिरण्यहस्तं नाम पुत्रं प्राप्तवती। एभिः कारणैः पुत्री उपेक्षापात्रं नासीत्।

कन्यायाः भ्रातृमत्त्वस्यापि महत्त्वमासीत्। पतुर्मरणानन्तरं स्वसुःसंरक्षणस्य विवाहस्य च भारः भ्रातुरुपरि आसीत्। अतः अभ्रातृका कन्या दुर्भाग्यशालिनी अमन्यत। भ्राता स्वसुः विवाहावसरे भूरिधनदानमप्यकरोत्[५]। ऋग्वेदस्य एकस्मिन् सूक्ते यमस्य यम्याश्च भ्रातृस्वस्रोः कथावर्णितास्ति यत्र यमी यमेन सह कामेच्छां प्रकटयति यमश्च तामस्वीकुर्वन् निरूणद्धि—

**न वा उ ते तन्वा तन्वं स पपृच्या पापमाहुर्यः स्वसारं निगच्छात्।**
**अन्येन मत् प्रमुदः कल्पयस्व न ते भ्राता सुभगे वष्ट्येतत्॥**[६]

अभ्रातृका कन्या स्वयमेव पतिं वृणुते अतः सा अपोदिता भवति। एकस्मिन् मन्त्रे उपसः तुलना अभ्रातृकया कन्यया कृता वर्तते- 'अभ्रातेव पुंस एति प्रतीची[७]। अन्यत्र पापवतां जनानां तुलना भ्रातृहीनया कन्यया, व्यभिचारिणया स्त्रिया पतिद्वेषिण्या पत्न्या च कृतास्ति—

**अभ्रातरो न योषणो व्यन्तःपतिरिपो न जनतो दुरेवा।**
**पापासः सन्तो अनृता असत्या इदं पदमजनता गभीरम्॥**[८]

---

* एसोसिएट प्रोफेसर, रजनीतिविज्ञान विभाग, राजकीय स्नातकोत्तर महाविद्यालय, चुनार।

परिणामतः एवंविधाः कन्याः आजीवनम् अविवाहिताः सत्यः पितुर्गृहे एव वृद्धाः अभूवन्। एवं प्रतीयते यदेताः दायभागाधिकारिण्य आसन्। आजीवनमविवाहितायाः कन्यायाः 'अमाजूरिति' पितृषद इति वा संज्ञा आसीत्। एकस्मिन् मन्त्र इन्द्रः एवं प्रार्थ्यमानोऽस्ति—

**अमाजूरिव पित्रोः सचा सती समानादा सदस्त्वामिये भगम्।**[९]

कन्यां युवतयो वा तदानीं गृहान्तर्निरुद्धा नासन्। ता अलङ्कृता भूत्वा। विवाहोत्सवेषु लोकोत्सवेषु च सम्मिलिताः भवितुं स्वतन्त्राः आसन्। उषसा विषये एकत्र वर्णितमस्ति - 'कन्येव तन्वा शाशदाना'[१०]। युवकयुवत्योः परस्परं मेलनं प्रतिषिद्धं नासीत्। मेलनस्थानस्य कृते शब्दद्वयं प्रयुक्तमस्ति- 'मर्यं न योषा कृणुते सधस्य आ'[११], 'अग्रपुत्र' इति कुमारीपुत्रस्य संज्ञा आसीत्। एवंविधः पुत्रः प्रशस्तो नामन्यत, अतः परित्यक्तोऽभवत्[१२]। ऋषिका घोषाअमाजूरूपेण वर्णितास्ति या वृद्धत्वे अश्विभ्यां पतिं प्राप्तवती - ''घोषायै चित् पितृषदे दुरोणे पतिं जूर्यन्त्या अश्विनावदत्तम्।''[१३] बृहद्देवतायामपि तस्याः रोगग्रस्तत्वाद् कुमारीरूपेण पितुर्गृहे निवासो वर्णितोऽस्ति—

**आसीत्काक्षीवती घोषा पापरोगेण दुर्भगा।**
**उवास षष्टिं वर्षाणि पितुरेव गृहे पुरा।।**[१४]

एकस्मिन् सूक्ते आत्रेय्याः अपालायाः इन्द्रद्वारा चर्मरोगात् मोचनस्य वर्णनं वर्तते।[१५] ऋग्वेदस्य विवाहसूक्तादेवं परिज्ञायते तद् तदानीं विवाहसंस्था पूर्णविकासमुपेयुषी आसीत्। विवाहसंस्कारः सत्ये सुकृते च प्रतिष्ठित आसीत् 'ऋतस्य योनौ सुकृतस्य लोके'[१६]। ऋग्वेदे पत्युरादेशान् पालयित्र्याः पत्न्याः[१७], प्रेमपूर्वकं सन्ततेः पोषयित्र्याः गृहिण्याः[१८] पत्या सह आहुतीः जुह्वत्याः सहधर्मिण्याश्च[१९] विस्तृतं वर्णनम् वर्णनम् उपलभ्यते। नववधूं प्रति गृहस्थाश्रमकर्तव्यकर्माणि उपदिशन्ती ऋक् अस्मिन् सन्दर्भे द्रष्टव्यास्ति—

**गृहानगच्छ गृहपत्नी यथासो वशिनीत्वं विदथमावदासि इह प्रियं।**
**प्रजयाते समृध्यताम् अस्मिन् गृहे गार्हपत्याय जागृहि।।**[२०]

विवाहावसरे वरो वधूश्च परस्परं समञ्जनार्थं विविधान् देवान् प्रार्थयतः -

**समञ्जन्तु विश्वेदेवाः समापो हृदयानि नौ।**
**सं मातरिश्वा संधाता समुदेष्ट्री दधातु नौ।।**[२१]

देवान् साक्षिणः कृत्वा वधूः प्रतिजानाति—

**मम व्रते ते हृदयं दधामि, मम चित्तमनुचित्तं तेऽस्तु।**
**मम वाचमेकमना जुषस्व प्रजापतिस्त्वा नियुनक्तु मह्यम्।।**

ततो वरोऽपि एवं व्याहरन् तस्याः हस्तं गृह्णाति—

**गृम्णामि ते सौभगत्वाय हस्तं, मया पत्या जरदष्टिर्यथासः।**
**भगो अर्यमा सविता पुरन्धिर्मह्य त्वादुर्गार्ह पत्याय देवाः।।**[२२]

वृद्धेन सह युवत्याः विवाहस्यापि ऋक्षु संकेतो लभ्यते। यथा वृद्धाय कक्षीवते वृचयायाः युवत्याः इन्द्रकर्तृकं प्रदानम्[२३] जराजीर्णस्य महर्षेः च्यवनस्य युवत्या सह विवाहः प्रसिद्ध एवास्ति[२४]। धनप्रदानेन कन्याक्रयणस्यापि केचित्सन्दर्भाः प्राप्यन्ते[२५]। विवाहसमये कन्यायाः वयोविषये सूर्यासूक्तात्[२६] ज्ञायते यत् क न्यायां पूर्णविकासं प्राप्नुवत्या तस्याः विवाहो विहित आसीत् सूर्या यदा पतिकामा अभवत् तदा तस्या विवाहो जातः। तात्पर्यमिदमस्ति यत् ऋग्वेदे कन्यायाः विवाहस्य कापि वयःसंख्या निर्धारिता नास्ति। तारुण्ये प्राप्ते सा यथेच्छं कस्मिन्नपि वयसि विवाहं कर्तुमशक्नोत् अथवा आजीवनम् अविवाहिताऽतिष्ठत्। यौतुकद्रव्यदानस्य

कापि प्रथा नास्ति। बृहद्देवतानुसारं दर्भपुत्रो राजा रथवीतिः स्वपुत्र्याः श्यावश्वेन विवाहावसरे पर्याप्तं यौतुकं प्रदाय तां पतिगृहं प्राहिणोत्—

**शुक्लमश्वशतं दत्त्वा अनुजज्ञे गृहान् प्रति।[२७]**

वैदिकसाहित्ये कापि सवर्णासगोत्रविवाहविषयकः कठोरो नियमो नासीत्।

यद्यपि ऋग्वेदे चातुर्वर्ण्यव्यवस्था तेषां श्रेष्ठ्यक्रमश्च वर्तते तथापि अन्तर्जातीयविवाहस्य बहूनि उदाहरणानि उपलभ्यन्ते। प्रतिलोमविवाहस्य निषेध आसीत्[२८]। महर्षेश्च्यवनस्य विवाहः अनुलोमविवाहस्योदाहरणम्। ऋषेः श्यावाश्वस्य राज्ञो रथवीतेः कन्यया सह विवाहः बृहद्देवतायामुल्लिखितोऽपि एवंविध एव। ऋग्वेदे सखी-मित्र-दूतप्रभृतयः शब्दाः घटक (मध्यस्थ) रूपेण प्रयुक्ताः सन्ति।[२९] भगः विवाहस्य सहायकदेवरूपेण वर्णितोऽस्ति[३०], पितृ-ऋणान् मुक्तये सन्तानोत्पत्तिः आवश्यकी, तदर्थं विवहसंस्कारः आवश्यकरूपेण वर्णितोऽस्ति[३१]। पतिविषयकस्य स्त्रियाः अभिलाषस्य विषये घोषायाः कथनमुल्लेखनीयमस्ति - ''प्रियोस्त्रियस्य वृषभस्य रेतिनो गृहं गमेमाश्विना तदुश्मसि।'' पत्न्याः महत्त्वविषये ऋग्वेदे कथितमस्ति 'जाया इद् अस्तम्'।[३२] जाया गृहं भवतीति। विवाहसमये पतिः व्याहरति- मह्यं त्वा दुर्गार्हपत्याय देवाः।[३३]

विवाहसम्बन्धः अविच्छेद्यः आसीत् अतः एकपत्नीप्रथयाः संकेताः मिलन्ति ऋग्वेदे। पुरूरवा उर्वशीम् आचष्टे- 'को दम्पती समनसा वियूयोदध यदग्निः श्वशुरेषु दीदयत्।[३४] श्वशुरगृहे वर्षिष्ठाः आशीरूपेण वधूं व्याहरन्ति- 'इहैव स्तं मा वियौष्टं'[३५]। अत्रैव वस, कदापि वियुक्ता मा भव। पत्नीपरित्यागस्यापि उदाहरणानि सन्ति यथा अपाला परित्यक्ता (परिवृक्ता) आसीत्[३६]। यज्ञवर्णनेषु एकस्या एव पत्न्याः उल्लेखाः सन्ति। विवाहविषये उच्चादर्शे सत्यपि पत्नीबहुत्वस्यापि उल्लेखाः ऋग्वेदे विद्यन्ते। ऋग्वेदे दशममण्डलस्य सूक्तद्वये एवं विधः संकेतोलभ्यते।[३७] पतिं न पत्नीरुशतीरुशन्तं[३८] क्षीरेण स्नातः कुयवस्य योषे।[३८] 'तपन्त्यभितः सपत्नीरिव पर्शवः'। सपत्नीनामुल्लेखः अस्ति किन्तु सहपतीनामुल्लेखो नास्ति। यद्यपि पतिशब्दस्य बहुवचने प्रयोगाः बहुत्र उपलभ्यन्ते किन्तु बहुपतिप्रथाऽऽसीदिति तात्पर्यं नास्ति तादृगुदाहरणाभावात्। यथा- यस्यां बीजं मनुष्या वपन्ति[३९]।

ऋग्वेदस्य विवाहसूक्तं ब्राह्मविवाहसम्बन्धितमस्ति। (१०.८५.९) सूर्यः स्वपुत्री सूर्यां सोमाय प्रादात्। रथवीतिद्वारा स्वपुत्र्याः श्यावाश्वाय ब्राह्माय प्रदानं दैवविवाहस्योदाहरणमस्ति। (५.५०.८१) एकस्याम् ऋषि विजामातृद्वारा वध्वै धनदानद्वारा तया सह विवाहः आसुरविवाहस्य उदाहरणमस्ति। स्वयंवरद्वारा कृताः सर्वे विवाहाः गान्धर्वविवाहस्योदाहरणानि सन्ति। अश्विनोः कमद्यूनाम्न्या सह विवाहः राक्षसविवाहस्योदाहरणं तस्याः पितुः अनुमत्यभावात्। ऋग्वेदे (१०.१०९.५) एकेन राज्ञा एकां ब्राह्मणीम् अपहृत्य कृतो विवाहोऽपि राक्षसविवाहस्योदाहरणमस्ति। पाणिग्रहणाग्निपरिणयनानन्तरं वधूः रथामारुह्य सकुशलं पत्या सह तद्गृहं गच्छति। अनेके मन्त्राः आशीर्वादरूपेणोच्चार्यन्ते। सुमङ्गलीरियं वधूरित्यादिभिः मन्त्रैः अतिथयः आकत्र्यन्ते तस्यै आशीर्वादप्रदानाय।

पत्नी पतिगृहे साम्राज्ञीरूपेणोद्घोष्यते। (१०.८५.४६)। पतिः पत्नी च दम्पती (गृहस्वामिरूपेणोच्येते) व्यपदिश्येते। तथापि पत्युःपृथक् पत्न्याः गृहसम्पत्तौ कोऽपि अधिकारो न भवति। दम्पत्योः यज्ञानुष्ठानेऽधिकारस्तु ऋग्वेदे बहुत्र वर्णितोऽस्ति। एकाकि न्याः स्त्रियाः अपि यज्ञेऽधिकार आसीत्। एकस्मिन् सूक्ते (८.९१) अपालायाः सोमयज्ञानुष्ठानेन चर्मरोगमुक्तेः वर्णनमस्ति। पुरुकुत्सस्य पत्न्या कृता इन्द्रवरुणयोः मन्त्रोच्चारणद्वारा पूजापि वर्णितास्ति। गृहाभ्यन्तरे स्त्रियाः यथा गृहस्वामित्वमासीत् तथैव यज्ञेऽपि सहयोगित्वमासीत्।

ऋग्वेदे यत्र कुत्रचिज्जारशब्दवस्योल्लेखात् ज्ञायते यत् स्त्रियाः स्वभावगतदौर्बल्यात् व्यभिचारस्य अल्पानि वर्णनानि मिलन्ति। एवं स्पष्टं भवति यत् तत्र पुरुष एव दोषभाक् न तु स्त्री। अक्षक्रीडनव्यसनिनः जायाम् अन्ये पुरुषाः परिमृशन्ति।

स्त्रियाः मातृरूपमेकं विशिष्टं रूपमस्ति। मातुर्हृदये स्वापत्यं प्रति अपरिमितं प्रेम भवति। तद्विषये ऋग्वेदे अनेके सन्दर्भाः सन्ति। इन्द्रवृत्रयोर्युद्धे इन्द्रेण आहतस्य पृथिव्यां पतितस्य च वृत्रस्य माता तं रक्षितुं तस्य देहं स्वदेहेनावृत्य अतिष्ठत् - 'सहवत्सा न धेनुः।' (१.३२.९) माता पुत्राय प्रशस्यतमं भागं ददाति। 'ज्येष्ठ माता सूनवे भागमाधात्।'(२.२८.५)। उषसं प्रार्थयमानः ऋषिः कथयति- 'स्याम मातुर्न सूनवः( (७.८१.४) माता कन्यामलङ्करोति (१.१२३.११) एभिरुद्धरणैः अन्यैश्च बहुभिः सिध्यति यत् ऋग्वैदिके समाजे परिवारे च मातुः तस्याः सन्तति प्रति प्रेम्णो विशिष्टं महत्त्वमासीत्। अतएव कश्चिद् ऋग्वैदिके समाजे विधवानां दशा दयनीया नासीत्। तदानीं 'सती-प्रथाया अपि प्रचलनं नासीत्। पत्यौ मृते विधवा जाता स्त्री तथैव विधवारूपेण सम्पूर्णं जीवनं यापितवती अथवा पुनर्विवाहं कृतवती। पुनर्विवाहस्य अधिकानि उदाहरणानि न लभ्यन्ते नियोगप्रथायाः प्रचलितत्वात्। 'गर्तारुगिव सनये धनानाम्' इति ऋचायां सायणानुसारेण गर्तारुगित्यस्यार्थः गतभर्तृका विधवा इति। डॉ. भगवतशरणोपाध्यायः 'विधवा' इत्येव मन्यन्ते। पुनर्विवाहविषये एताम् ऋचं ते प्रमाणत्वेनोपस्थापयन्ति। सन्तानविहीना विधवा नपुंसकपत्नी वा स्वदेवरेण सह अन्येय निकटसम्बन्धिना पुरुषेण वा सह सम्बन्धं कृत्वा यदि सन्तानवती भवति तर्हि एषा प्रक्रिया नियोग इत्युच्यते। नियोगेन जातः पुत्रः दत्तकपुत्रापेक्षया श्रेयान् भवति। नियोगशब्दप्रयोगं कृत्वा एकया ऋचा अग्निः प्रार्थतोऽस्ति यत् 'हे अग्ने अन्येन उत्पादितः पुत्रः पुत्रो ना।' (७.४.७)। एकस्यामृचि अश्विनौ संबोधितौ- 'को वाम् कायुत्रा विधवेव देवरम्' (१०.४०.२) उद्धरणमेतद् नियोगं पुनर्विवाहं वा निर्दिशति। निरुक्ते देवरशब्दः 'द्वितीयोवरः, इति व्याख्यातोऽस्ति। (३/१५)। देवाः वध्रिमत्यै हिरण्यहस्तनामानं पुत्रं प्रादुः। (१.११७.२४ इत्यादिषु)। ऋग्वेदे सतीप्रथायाः विषये खण्डनपरकं मण्डनपरकं वा किमपि प्रमाणभूतमुदाहरणं नोपलभ्यते। एकस्याः ऋचोऽनुसारेण इयं क्रिया प्रतीकरूपेण विद्यमानाऽसीत्। पत्यौ मृते पत्नी चितायां तत्पार्श्वे संविशति। किन्तु सा ततः उत्थातुमं निर्दिश्यते—

**ऊदीर्ष्व नार्यभि जीवलोकं गतासुमेतमुपशेष एहि।**
**हस्तग्राभस्य दिधिषोस्तवेदं पत्युर्जनित्वमभि सं बभूथ।।**

बृहद्देवतायामपि एषैव प्रतीकक्रिया शब्दान्तरेण वर्णितास्ति—

**उदीर्ष्व नारीत्यनया मृतं पत्यनुरोहति।**
**भ्राता कनीयान् प्रेतस्य निगद्य प्रतिषेधति।।** (७.१३)
**देवरस्याभावे होता प्रतिषेधं करोति।** (७.७१४)

यथा पूर्वमेव प्रतिपादितं ऋग्वेदानुसारेण नारीणां यज्ञे वेदाध्ययने च अधिकारः आसीत्। किमतः परं गौरवास्पदं स्थानं स्यात् यत् मन्त्राणां न केवलं उच्चारयित्र्यः अपितु मन्त्रद्रष्ट्र्योऽपि ऋषिकास्ता अभूवन्। काक्षीवती रोमशा लोपामुद्रा च प्रथममण्डलवर्तिनां कतिपयमन्त्राणां, आत्रेयी विश्वावारा पञ्चममण्डलवर्तिनां षण्णां मन्त्राणाम्, आंगिरसी, शाश्वती, अपाला च अष्टममण्डलवर्तिनां केषाञ्चिनमन्त्राणाम् एवमेव अदिति-कुशिका-घोषा-जुहू-यमी-शची-श्रद्धा-सूर्याप्रभृतयः ऋषिकाः दशममण्डलवर्तिनां मन्त्राणाम् द्रष्ट्र्योऽभूवन्। सर्वासां पूर्णं विवरणमत्र विस्तारभिया न प्रस्तूयते। ऋग्वेदे नारीणां वीरताविषयकाः सन्दर्भाः अपि सन्ति। ताः युद्धेष्वपि पुरुष-सहगामिन्योऽभवन्। (५.३०.९)। मुद्गलस्य पत्न्याः इन्द्रसेनायाः रथसञ्चालनस्य तदर्थं पुरस्कारप्राप्तेश्च

वर्णनमस्ति। (१०.१०२.२) तासां दर्शनं शुभशकुनरूपेण वर्णितमस्ति। स्त्रीणामपहरण-ऋग्वेदकालेऽप्यभवत् इत्येकस्मिन् सुक्ते (१०.१०९) वर्णितमस्ति। किन्तु एतदपहरणं पापत्वेनाभिमतम् आसीत्। राजा सोमो बृहस्पतेः पत्नीमपहृतवान् किन्तु मित्रावरुणयोरनुरोधेन तां परावर्तयत् निष्पापश्च जातः। ऋग्वेदे प्रतीकात्मकरूपेण निकटसम्बन्धिभिः पुरुषैः सहस्त्रीणां यौनानैतिकव्यवहाराणां वर्णनं लभ्यते यथा यमयमीसम्बन्धः, सूर्योषसोः सम्बन्धः, जनकेन सह पुत्र्याः संबन्धः, किन्तु एते सन्दर्भों प्रतीकात्मकरूपेण प्रकृतेः स्वरूपाणि व्याख्यातुं वर्णिताः सन्ति।

निष्कर्षतः एवं वक्तुं शक्यते यत् ऋग्वेदे नारीणां विविधपक्षाणां उदात्तं सामाजिकं स्वरूपं वर्णितमस्ति। शनैःशनैः परिवर्तिसाहित्येषु वैदिकेषु पौराणिकेषु वा तासां स्वरूपमधोगतिं प्राप्तम्। अत्र समाजपरिवर्तनमेव हेतुः न तु गौरवशालिनी वैदिकी परम्परा। इतिशम्।

◆

सन्दर्भाः


१. ऋग्वेद ९/३८/४
२. ऋग्वेद १/११९/५
३. ऋग्वेद १०/२७/१२
४. ऋग्वेद १०/४०/२
५. ऋग्वेद १/१०९/२
६. ऋग्वेद १०/१०/१२
७. ऋग्वेद १/१२४/७
८. ऋग्वेद २/१७/७
९. ऋग्वेद २/२७/७
१०. ऋग्वेद २/१२३/१३
११. ऋग्वेद १०/४०/२
१२. ऋग्वेद ४/१९/९
१३. ऋग्वेद १/११७/७
१४. बृहद्देवता ७/४२
१५. बृहद्देवता ८/९१
१६. ऋग्वेद १०/८५/२४
१७. ऋग्वेद १/१२२/२
१८. ऋग्वेद ७/८१/४
१९. ऋग्वेद ८/४३/१५,८/१३/१३
२०. ऋग्वेद १०/८५४७
२१. ऋग्वेद १०/८५/३६
२२. ऋग्वेद १/५१/१३
२३. ऋग्वेद ५/५७/५
२४. ऋग्वेद १/१०२/२
२५. ऋग्वेद १०/८५
२६. ऋग्वेद ५/८०
२७. ऋग्वेद ५/८०
२८. ऋग्वेद १०/१०९/५
२९. ऋग्वेद १०/३२/१,१०/८५/२३,१०/६८/२
३०. ऋग्वेद १०/६८/२,१०/८५/२३
३१. ऋग्वेद ६/६१/१
३२. ऋग्वेद ३/५३/४,१०/४०/११
३३. ऋग्वेद १०/८५/३६
३४. ऋग्वेद १०/९५/१२
३५. ऋग्वेद १०/८५/१२
३६. ऋग्वेद ८/९१/४
३७. ऋग्वेद १/७२/११
३८. ऋग्वेद १/१०४/३
३९. ऋग्वेद १०/३३/२
४०. ऋग्वेद १०/८५/३७
४१. Women in Rgved by Dr. Bhagavata Sharan Upadhyay.
४२. वैदिक एवं धर्मशास्त्रीय साळितय में नारी - डॉ. एस्. कुजूर.
४३. वैदिकसंहिताओं में नारी - डॉ. मालती शर्मा।
४४. The Position of women in Hindu Civilization. - Dr. A.S. Altekar.


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 57-59

# श्रीसीतारामचरितयोर्वेदमूलकत्वम्

डॉ० साधना त्रिपाठी*

श्रीसीतारामयोश्चरित्रं मन्त्ररामायणे, पूर्वोत्तरतापत्रयोपनिषदि, रामरहस्योपनिषदि, रामतापनीयोपनिषदि, मुक्तिकोपनिषदि प्रभृतिषु च पुष्कलेन प्राप्यते। तथा च यथा मन्त्ररामायणे रामकथाया विस्तारः सीतोपनिषदि सीतामाहात्म्यस्य विस्तारश्च दृश्यते। अन्यानेकेषूपनिषतसु अपि श्रीरामस्यपवित्रं पावनञ्च चरित्रं वर्णितमस्ति। तथाहि–अध्यात्मरामायणे, आनन्दरामायणे, अद्भुतरामायणे, महाभारते, भागवते, पद्मपुराणे, स्कन्दपुराणादिषु च श्रीरामस्य चरितं विस्तरेण चमत्कारेण च वर्णितमस्ति। एताषु सर्वास्वपि रचनासु वेदानां महत्वं, श्रीरामस्य परमेश्वररूपत्वं, श्रीसीतायाश्च महाशक्तेः स्वरूपं रामरूपत्वञ्च सपष्टतया निगदितमस्ति। एवमेव ऋग्वेदस्य दशममण्डले त्रिनवतितमे (९३) च सूक्ते श्रीरामस्य राजारूपेण स्पष्टं वर्णनं विद्यत एव। वाल्मीकिरामायणेऽपि–

**प्राप्तराज्यस्य रामस्य वाल्मीकिर्भगवानृषिः।**
**चकार चरितं कृत्स्नं विचित्रपदमर्थवत्।।** इत्युक्तम्।

किञ्च-रामराज्ये–

**न पुत्रमरणं केचिद् द्रक्ष्यन्ति मनुजाः क्वचित्।।**[१]
**चातुर्वर्ण्यं च लोकेऽस्मिन् स्व स्वधर्मे नियोक्ष्यति।।**[२]

इत्यादि वर्णनं दृश्यत एव।

एवं च महर्तिवाल्मीकि प्रणीत आदिकाव्ये श्रीमद्वाल्मीकीयरामायणे किष्किन्धाकाण्डस्य तृतीय सर्गे भगवद्दर्शनेन शङ्कमानेन सुग्रीवेण प्रेषितं परिचयमनीषया पृष्टवन्तं धीमन्तं हनुमन्तं प्रशंसता लक्ष्मण प्राति वदमानेन विगतमानेन भगवता राघवेन्द्रेण रामचन्द्रेण त्रयाणामेकव वेदानां चर्चा समचर्चि। यथा—नानृग्वेदविनीतस्य, नायजुर्वेदधारिणः। नासामवेदविदुषः शक्यमेव प्रभावितुम्।। यथा रामायणे परब्रह्मणः सनातनस्य मर्यादापुरुषोत्तमस्य चारुचरित्रं सजीव चित्रमिव चित्रितं तस्य रामो महाविष्णुः परं ब्रह्म सुरकार्य चिकीर्षया दशरथपुत्रता स्वीकृत्य कौसल्यायां प्रकटयाम्बभूव।

इत्थं नारदोपदेशेन, ब्राह्मणश्च प्रत्यक्षदर्शनद्वाराऽऽशीर्वादेन च महर्षिर्वाल्मीकिराचमनं विधाय प्राक्तनकुशासनोपविश्य धर्मेणसमाधिजन्य आर्षज्ञानेन ऋतम्भरा प्रज्ञया च श्रीसीता-राम-लक्ष्मणादि चरित्राणां साक्षात्कारं कृतवान्। ततः श्रीसीता-राम-लक्ष्मणादि हसित-भाषित-गति-चेष्टितानामपि धर्मवीर्येण सम्यग् दर्शनं कृतवान्। आधुनिके युगे सम्वाददातृभिः तारतन्तुभिः, टेलीप्रिन्टराभिधयन्तैश्च समाचारैच चक्षुप्रत्यक्षचटनासु च भ्रान्तिः सम्भवाः, परं योगज ऋतम्भराप्रज्ञाद्वारा साक्षात्ज्ञाने भ्रान्तिरसम्भवा। एवं महर्षिः यदः धर्मज्ञानबलेन

* सुधाकर रोड, खुजुरी रोड, पाण्डेयपुर, वाराणसी-२२१००२

सर्वं तत्त्वत आत्मनि सन्निवेशितं तदा रामचरितवर्णनं रामायणरूपेण प्रारब्धमिति जानत्येव प्रण:। तदुक्तम्–

**श्रुत्वा वस्तुसमग्रं तत् धर्मार्थसहितं हितम्।**
**व्यक्तमन्वेषते भूयो यद् वृत्तं तस्य धीमतः।।**
**अस्पृश्योदकं सम्यङ मुनिः स्थित्वा कृताञ्जलिः।**
**प्राचीनाग्रेषु दर्भेषु धर्मेणावेक्षते गतिम्।।[३] इत्यादि।**

महाकवि कालिदास: स्वीयरघुवंशमहाकाव्यस्य त्रयोदशसर्गे प्रथमे श्लोके पुष्कारुढरामं सीतायायाशंसन्तं समुद्रं हरिशब्दस्य रामाभिधान: इति विशेषणं प्रयुञ्जानस्तं श्रीरामरूप ब्रह्मवाचकं व्यवस्थापन् नितरार्थेभ्यां व्यावर्ततयति—

**यथात्मनः शब्दगुणं गुणज्ञः पदं विमानेन विगाहमानः।**
**रत्नाकरं वीक्ष्य मिथः स जायां रामाभिधानो हरिरित्युवाच।।**

वैदिक साहित्यादारभ्य अर्वाचीन साहित्यं यावत श्रीरामस्य वर्णनं दृश्यते। कुत्र मनुष्यरूपेण स: विचित्रां लीलां दर्शयति च कुत्र वा परब्रह्मरूपेण विशुद्धचैतन्यरूपेण सर्वेषुभूतेषु स्वप्राकट्यं दर्शयति।

एवं हि चतुर्विंशति सहस्रश्लोकै:, पञ्चाशत् सर्गै:, षट्काण्डै:, उत्तरकाण्डसहितं सप्तकाण्डैश्च श्रीसीतारामचरितै रामाणरचना वाल्मीकिश्चकार, तथा च वेदार्थे परिनिष्ठितो सीतासुतकुशीलवौ वेदोपबृंहणाय सम्पूर्णं रामायणं पाठयामास। एतेन सिद्धमिदं यद् श्रुतितात्पर्यविषयीभूत परमतत्त्वस्यैव वेदार्थस्य प्रतिपादनाय रचना समजनि रामायणस्य। तदुक्तम्–

**स तु मेधाविनौ दृष्ट्वा वेदेषु परिनिष्ठतौ।**
**वेदोपबृहणार्थाय तावग्रायतः प्रभुः।।[१] इति।**

वैदिकसाहित्ये देवानां भक्तिसाहचर्यं दृश्यते। ऋत्विक् समर्पितस्य हविर्भागस्य सेवार्थं ते देवा: संहति सम्मति च दर्शयन्ति। 'यज्' सेवायाम् इति धात्वर्थबलेन देवादिनिष्ठ प्रीत्यनुकूलव्यापारो भजेरर्थ:। सेव्य-सेवक सम्बन्धमूलतया सेव्य इष्टदेव: सेवकश्च जीवो भवति। भक्ते: विकासक्रमे साध्यरूपाया: साधनरूपायांच प्रायेण वर्णनं दृश्यते। तत्रसाधन-भक्तौ नवधाभक्ति: प्रसिद्धिं गता। लोकविग्रहस्य मानुषरूपस्य श्रीरामचन्द्रस्य चरितं अध्यात्मरामायणे वर्णितमस्ति। तत्र परमात्मरूपे श्रीरामतत्त्वं प्रतिष्ठितं वर्तते।

रामायणे हि श्रृंगार-करुण-हास्य-रौद्र-भयानक-वीरादि विचित्र रसानां सम्यक् परिपाको दृश्यते। गान्धर्व-तत्वज्ञौ, स्वरयुक्तौ, परमरूपवन्तौ कुशलवौ वीणावादनेन सह रामायणगानस्याभ्यासं चक्रतु:, येन ऋषि-महर्षियोऽपि पुलकिता: सन्त: साधु-साधु इति वदन्त: मोदमवाप्नुवु:, कुठार-कण्डलु प्रभृति पुरस्कारान् ददन्त आसन्। तौ च स्व दिव्यगानेन सर्वेषां शरीरं, मनांसि, अङ्गानि, हृदयाह्लादयन्तौ परमं प्रियं बभुवतु:[२] किञ्च लव-कुशेभ्यो रामायणं पाठयित्वा तस्य परीक्षणाय महर्षिस्तदानीन्तनेषु जनपदेषु च प्रचारयामास। अयोध्यावासिनां जीवन या: या: घटना: घटिता: जातास्तासा श्रवणेनायोध्यावासिन परमं प्रमोदमवापु:। वाल्मीकिरामायणे रामं महाद्युतिं शङ्ख-चक्र-गदा-पद्मधरम् अवतरित विष्णुरिति कथितम्।[३] सर्वजगदनुग्रहककारको विष्णुरवे उदीर्णरवे उदीर्णदर्परावणवधार्थाय मनुष्यलोके रामरूपेण प्रकटित:। अतौ राम: सर्वप्रिय: समदर्शी च जात:। यथा–

**लोके न हि स विद्यते यो न राममनुव्रतः।।[४]**

एवमेव वाल्मीकिरामायणस्वेदानुवर्तित्वे रामायणे वहूनि वचनानि दृश्यन्ते।

यथा—सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः।।[५]इति।
वेदाः सत्यप्रतिष्ठानांस्तस्मात् सत्यपरो भवेत्।। इत्यादि च।

◆


**सन्दर्भाः**

१. तत्रैव १/४/६
२. वा०रा० २/४/१
३. मूलरामायणे–१/१/९१।
४. मूलरामायणे-
५. वा०रा० १/३/१-२
६. तत्रैव १/४/६
७. वा०रा० ७//१४
८. वा०रा०-१/१५/१६
९. तत्रैव २/३७/३२
१०. तत्रैव २/१०९/१२


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 60-65

# सूर्य आत्मा जगतस्तस्थुषश्च

डॉ. कृष्णमोहनपाण्डेयः*

सूर्यः स्थावरजङ्गमरूपजगत आत्मा। सर्वप्रसिद्धस्य ऋग्वेदस्य मन्त्रांशोऽयं दृश्यते 'सूर्य आत्मा जगतस्तस्थुषश्च' सूर्यमखिलब्रह्माण्डस्यात्मानमुद्घोषयति। यस्येश्वरस्यामूलकल्पनमस्माकमतिपूजनीयभारतीयमनीषायामवाङ्मनसगोचरमधिगृह्यते। तस्य साक्षाद्दर्शनं सूर्ये कर्तुं शक्नुमो वयम्। ऋग्वेदादारभ्यानेकेष्वाकरग्रन्थेषु सूर्यस्य यन्महत्त्वं व्यापकत्वंचास्माकं दृग्गोचरं भवति, तदवलम्ब्य वयं सूर्यस्य प्रत्यक्षेश्वरत्वमङ्गीकर्तुं क्षमाः।

सूर्यः प्रायो द्युस्थानीयदेवतेति स्वीक्रियतेऽस्माभिः। देवतापदस्य या व्युत्पत्तिराचार्ययास्केनोक्ता सा तु बहुदेववादे विश्वसितुमस्मान् द्रढयति-देवो दानाद्वा, दीपनाद्वा, द्योतनाद्वा द्युस्थानो भवतीति वा।[१] व्युत्पत्याऽनया सूर्यस्यानन्तशक्तीनां सम्पूर्णाभासो वयं कर्तुमक्षमा यतो हि यस्या अनन्तशक्तेर्निधिः सूर्यस्तस्यारेव कल्पनाऽस्माभिः प्रायशः परोक्षे ब्रह्मणि विधीयते यास्केन बहुदेववादमभिधाय सूर्यश्च केवलं देवतेति निर्दिश्याऽकुंचितः समाहृतो वा तस्य महिमा। यद्यपि तस्य निराकरणमपि तत्रैव विहितमेवं-तासां महाभाग्याद् एकैकस्या अपि बहूनि नामधेयानि भवन्ति।[२]

सूर्येश्वरत्वविधायिनी कल्पनेयं निराश्रया नास्ति। अथर्ववेदीयप्रश्नोपनिषदि यदा ऋषिः कबन्धी पृच्छति यत् सर्वे प्राणिनः कुतो जयन्ते? तदा ऋषेः पिप्पलादस्योत्तरं सूर्यस्येश्वरत्वमेव समर्थयति। अग्रे तेनोच्यते यद् यस्सर्वेषां सार्वभौमरूपाणां स्रोतः सर्वज्ञः सर्वाधारो देदीप्यमानोऽद्वितीयश्च सर्वाल्लोकान् प्रज्वालयन् प्रकाशयन् वा बहुधाभिव्यक्तः प्रजायाः प्राणभूत उदीयमानश्च, स केवलं सूर्य एव—

**विश्वरूपं हरिणं जातवेदसं परायणं ज्योतिरेक तपन्तम्।**
**सहस्ररश्मिः शतधा वर्तमानः प्राणः प्रजानामुदयत्येष सूर्य।।**[३]

आचार्यशौनकेन बृहद्देवतायां सूर्यं सर्वशक्तिसम्पन्नं प्रमाणतयोक्तं यदेकाकिनः सूर्यादेव भूतभविष्यवर्तमानाः सर्वे स्थावरजङ्माः पदार्था जायन्ते तस्मिन्नेव च लीयन्ते। एष सूर्य एव प्रजापतिः सदसतो मूलंच। एषोऽक्षरमव्ययं शाश्वतंच ब्रह्म। एष एव त्रिषु भागेषु विभक्तः सन् त्रिषु लोकेषु वर्तते।[४]

ऋग्वेदस्येको मन्त्र उद्घोषयत्येतद् यत् सूर्य एव मानवानां स्रष्टा सर्वेषाङ्कृते ज्ञानं जीवनं च प्रदायकः। समयचक्रमपि परिवर्तयि केवलं सूर्य एव क्षमः।[५] अथर्ववेदेऽपि प्रथमस्य काण्डस्यैकं सूक्तमेतद्रहस्यमुपस्थापयति यद् ब्रह्म सूर्यरूपे एष सर्वप्रथममजायत। स मध्ये स्थात्वा सुप्रकाशितताननेकान् पिण्डान् प्रासारयत्। तेनैव आकाशे वर्तमानेषु विशिष्टेषु स्थलेषु स्थितानां पदार्थानां सदसतोश्चोत्पत्तिस्रोतस्य द्वारमपावृतम्। वस्तुत एष सूर्य

---

*. असिस्टेण्टप्रोफेसर, स.ध. आ.म. डोहगी, बंगाणा, ऊना, हि.प्र.-१७४३०७.

एव ब्रह्म। अस्यैव सूक्तस्यैकस्य मन्त्रस्य भावोऽयं यत् स परमात्मा (ब्रह्म अर्थात् सूर्यः) एव द्युलोकं पृथिवीलोकं च संव्याप्य शाश्वतैः सत्यनियमैस्तयोर्बृहतोर्लोकयोः स्वान्तः स्थापनं विदधाति। स एतयोर्मध्ये सूर्यरूपेणाविर्भूय द्यावापृथिवीरूपं गृहं स्वतेजसा संव्याप्नोति।[६] यदा ब्रह्मेदं देवतेति प्रकारेण कल्पितं तदेदं देवानामग्रज इत्युक्तमर्थाद् सर्वप्रथमं सूर्य एवं अजायत।[७] यजुर्वेदस्येको मन्त्रः सूर्यो ब्रह्मेति प्रतिपादयन् निर्दिशति—

**यो देवेभ्यो आतपति यो देवानां पुरोहितः।**
**पूर्वो यो देवेभ्यो जातो नमो रुचाय ब्राह्मये।।**

अर्थात्सः परब्रह्मस्वरूपः प्रकाशमानः सूर्यः पृथिव्यादिलोकार्थं तपति, देवानां पुरोहितः, देवानां प्रवर्तकः प्रकाशकः सर्वेषां च देवानामादौ जातस्तन्ब्रह्मणे नमः।[८] ईदृगेव वर्णनमृग्वेदस्य ५.८२ इति सूक्तेऽपि कृतम्। सूर्ये कानि तत्त्वनि विद्यमानानि न सन्ति। अनन्ताभिर्रश्मिभिः प्राणैर्रसैश्च युक्तत्वाद्, आकाशे गमनाद्, लोके उदयन्नेव जनान् कर्मसु प्रेरकत्वात्, सर्वस्य जगतो जनयितृत्वात् स प्रकाशयिता सूर्य उच्यते इमानि तथ्यानि सूर्यः परब्रह्मणः साक्षादवतार इति स्वीकर्तुमस्मान् विवशाङ्कुर्वन्ति। अव्याकृतः परमात्मारूपः, सर्वेषां प्राणिनां जीवनहेतुः, प्राणस्वरूपः, स्थावरजङ्मोत्पादक एष सूर्य एवास्ति ईश्वररूपः। अत एष एव सर्वैरुपास्यः। जगद्व्यवहारे समयदेशक्रियाकर्तृकरणकार्यागमद्रव्यफलानि सर्वाणीमानि सूर्य एव। विश्वस्य जगतः कल्याणस्य देवतादेस्तृप्तेश्चाधारोऽपि सूर्य एव। अतस्सूर्यश्चराचरजगदात्मा।

शुक्लयजुर्वेदस्यैको मन्त्रः सूर्यरहस्यमुद्घाटयति यदेतयोर्दिवः पृथिव्योश्च मध्ये स्थितो, दिव्यगुणयुक्तः, सर्वतो दीप्तिमान् बुद्धिप्रदाता, क्रान्तकर्मा, अप्रतिहतक्रियासम्पन्नः, सिद्ध्यर्थं प्रेरकः, रमणीयरत्नानां धारकः पोषकश्च, दाता, रत्नरूपो, ब्रह्मविद्याधाम, समस्तस्थावरजङ्गमप्राणभूतो, मननीयोऽनुपमकल्पनाशक्तिसमृद्धः क्रान्तदर्शी, वेदविद्योपदेष्टा परमब्रह्म सर्वोत्पादकः सूर्यः स्तूयते।[९]

बृहदारण्यकोपनिषदि सूर्यस्य ब्रह्मत्वमनुमोदयता गार्ग्येणोक्तं यदिदं व्यक्तं जगत् पुरा जलमेवासीत्। तत् सत्यमरचयत्सत्यमिदं ब्रह्म, ब्रह्म चैवादित्यः। अहमिमेवादित्यं ब्रह्मरूपिणमुपासे—

**असावादित्ये पुरुष एतमेवाहं ब्रह्मोपास इति।**[१०]

अथर्ववेदस्येकस्मिन्मन्त्रे सर्वे देवाः सूर्यं स्तुवन्तस्तमेव सर्वसामर्थ्यवन्तमभिदधति।[११]

**ब्रह्मसूर्य इवानन्तज्योतिष्मान् ब्रह्म सूर्यसम ज्योतिः।**[१२]

अत्र सूर्यस्योपमानत्वं श्रेष्ठतां द्योतयति। सूर्य एव एकमात्रमीदृक्त्वं यः संसारे निरपेक्ष एकाकिसंचरणसामर्थ्यवाँश्च—

**सूर्य एकाकी चरति।**[१३]

सूर्यमण्डलस्य रहस्योद्घाटनन्नारायणोपनिषद्येवं कृतं यत् सूर्यमण्डलस्य यत्तपस्तदृचामस्ति, अतः स ऋचां लोको वर्तते आदित्यमण्डलस्यार्चिषाम्नामस्ति। अतः स लोकस्साम्नाम् एष्वर्चिषु यः पुरुषः स यजुः स च यजुषां लोकः। एवमादित्यमण्डले त्रयी विद्या एव हिरण्मयपुरुषरूपे वपति आदित्य एव तेजो ओजो बलं पराश्चक्षुश्श्रोत्रमत्या मनो मन्युर्भनुर्मृत्युसमत्यं मित्रं वायुराकाशः प्राणो लोकपालश्चादयः। इत्थमादित्ये अन्तर्भूतस्य स्वयम्भुवो ब्रह्मण उपासनया सायुज्यं सृष्टेश्च मुक्तिरवाप्यते।[१४] प्राय एतदेव रहस्यं शतपथब्राह्मणेऽपि 'यदेतन्मण्डलं तपति तन्महदुक्थम्' इत्यादौ वर्णितम्। सूर्यपुराणे सूर्य ऋग्यजुष्सामरूप इति कथितम्—

**नत्वा सूर्यं परं धाम ऋग्यजुःसामरुपिणम्।**

सूर्य एव सर्वेषामुत्मादकः 'नूनः जनाः सूर्येण प्रसूता'। ब्रह्मस्वरूपः स सूर्य एक एवेति पुष्णाति ऋग्वेदस्यैको मन्त्रः। स सूर्यस्तिस्त्रः पृथिवीस्त्रींच द्युलोकान् धारयन् द्युलोकेऽवस्थितः—

**तिस्त्रो भूमिर्धारयन् त्रीरुतघन त्रीव्रताविदथे अन्तरेषाम्।**
**ऋतेनादित्या महि वो महित्वं तदर्यमन् वरुण मित्र चारु।।**[१५]

अननैव प्रकारेण ऋग्वेदे अनेके मन्त्रा एवंविधा येषां भावार्थोऽयमेव यत् सूर्यस्तिस्त्रः पृथिवीस्त्रीं च द्युलोकान् दधाति। ऋग्वेदस्य द्वितीयमण्डलस्य सप्तविंशतितमस्य सूक्तस्य प्रथममन्त्रे विराजः सूर्यस्य षडन्यानि नामानि उल्लिखितानि। एवं नवममण्डलस्य ११४.३ इत्यस्मिन् सप्तानामादित्यानां संख्या वर्णिता। सूर्योपनिषत् सूर्यस्य सर्वस्वतां कथयति—

**सूर्याद्भवन्ति भूतानि सूर्येण पालितानि तु।**
**सूर्ये लयं प्राप्नुवन्ति यः सूर्यः सोऽहमेव च।।**[१६]

सूर्यसिद्धान्ते सूर्यो जगदादिरुक्तः, अस्मादेव कारणात् स आदित्य इत्युच्यते। एष एव सूर्यो जगत्प्रसूते—

**आदित्यो ह्यादिभूतत्वात् प्रसूत्या सूर्य उच्यते।**
**परं ज्योतिस्तमः परि सूर्योऽयं सवितेति च।।**[१७]

सूर्येविद्यमानानन्तरहस्यानां ज्ञानार्थं सामान्यः प्राणी अक्षम एव। स सूर्यः कुत्र निवसति। तस्य का गतिः? तस्य किं सामर्थ्यम्? इत्यादीनि रहस्यानि अद्यापि केनापि नावगतानि। अनन्तज्ञानद्रष्टार ऋषयोऽपि तस्य रहस्यमवगन्तुं स्वासमार्थ्यमेवोक्तवन्तः।[१८] सूर्यापरिमितशक्तिज्ञाने अक्षम ऋषिर्यदा ब्रवीति यत् सूर्यो हिरण्यहस्तः, प्राणदः, कल्याणकृत् दिव्यगुणयुक्तो मनुष्याणां सर्वेषां निवारको दुष्कृतां च संहारकस्तदा सूर्यस्येश्वरत्वं सिद्धिमवाप्नोति।[१९] यजुर्वेददृष्टौ सूर्यः स्वयम्भूः, सौरमण्डलस्य सर्वश्रेष्ठं तत्त्वं सर्वांल्लोकान् प्रकाशयति, सर्वेभ्यश्च प्राणिभ्यो वर्चो ज्योतिश्च ददाति—

स्वयम्भूरसि श्रेष्ठ रश्मिर्वचोदा असि वर्चो मे देहि। सूर्यस्यावृतमन्वावर्ते।।[२०]

सूर्ये प्रकाशिते सत्येव सर्वेषां प्रतापो लुप्यते अर्थात् तत्समक्षं कस्यापि ऐश्वर्यं क्षीयते।[२१]

सूर्य एवेकमात्रमीदृक्तत्वं यः समग्रस्य जगतो दर्शनीयो प्रकाशक इति।[२२]

प्राणनापाननक्रिया एवं जीवनाधारभूता अस्याश्च क्रियायाः मूलाधारः सूर्यः। सूर्यरश्मयः सर्वेषां प्राणिनामन्तः करणेषु प्राणनापाननादिव्यापारान् कुर्वन्त आसते। एष एवोदितो भूत्वा समस्तभूमण्डले व्याप्यते येन जीवनं सम्भवति। जीवनदातृ आत्मस्वरूपं च सूर्यमण्डलमिदं ब्राह्मणानां दृष्टौ ब्रह्माविष्णुमहेशानां मूलमस्ति। तदेवोत्पादकत्वाद् ब्रह्मा, अधिष्ठातृत्वादिन्द्रो यज्ञमयत्वाच्च विष्णुः—

**एकामूर्तिस्त्रयो देवाः ब्रह्माविष्णुमहेश्वराः।**

ब्रह्माण्डेऽस्मिन्नस्माकमखिलं गौरवमयं वाङ्मय द्वादशादित्यानुल्लिखित। यद्येषु सर्वेषु नामसु विचार्यतां तर्हि सूर्यस्येश्वरत्वं स्वयमेव स्पष्टतां याति। महाभारते द्वादशानामादित्यानान्नमानि एवं वर्णितानि-धाता अर्यमा मित्रो वरुण अंशो भग इन्द्रो विवस्वान् पूषा त्वष्टा सविता विष्णुश्च। एषु द्वादशसु नामसु किं रहस्यं निहितमिति यदोद्घाट्यते तदेदं स्पष्टीभवति यदेतत् सूर्यतत्वमेव चराचरजगत् सर्वतो व्याप्येदं रक्षति पुष्णाति च। यत यादृक्कर्म कालः परिस्थितिर्वोपतिष्ठते तत्र तादृगेव नाम स्तूयते। सम्भवत एतदेव मूलं चोत्तरकाले पौराणिकदेवानामुद्गमस्य।

सर्वेषां पापानां रोगाणामपरिमितारिष्टानां प्रत्यक्ष- परोक्षशत्रूणां शमनादेर्यो कल्पना भवति मानवमस्तिष्के तस्याः पूरयितुं सामर्थ्यं केवलं सूर्ये एव। अथर्ववेदीय एको मन्त्रो निर्दिशति यद्भगस्य स्तुतिः सर्वेषु देवेषु श्रेष्ठा। एष भग एव सूर्यः। विवस्वान् पूषा त्वष्टा धाता विधाता सविता मित्रो वरुण आदित्यः शक्र उरुक्रमो विष्णुर्भग इत्यादीन्यनेकानि नामनि पृथक्पृथग् देवानां सन्त्यपि सूर्यस्यैव वाचकानि। अत एवैभिर्नामभिरेषां देवानां वर्णनेन सह सूर्योऽपि स्तूयते। यदा भगः सविता वा भगः प्रसविता वेत्युच्यते तदास्यार्थोऽयमेव यत् स्वयं भगवान्—

**भग एष भगवाँ अस्तु देवः सनो भग पुर एताभमेव।**
**त्वां त्वां भग सर्व इज्जोहविमि स नो भग पुर एता भवेह।।**[२३]

सूर्योदयेन सहैव जगतः कार्याणि प्रारभ्यन्ते। सूर्य एव नियामकोऽहोरात्रस्य ऋतुचक्रस्य च। सूर्यस्योष्मषा विना वनस्पतयोऽक्षमाः पाकमाप्तुम् अन्नेनापि उत्पतिं गन्तुं शक्यते न। परिणामतः प्राणधृतोऽप्यसमर्थाः प्राणधारणे। वस्तुतः प्रकृतेर्रहस्यं ज्ञातमेष सूर्य एव साधनमेकमात्रम्। मैत्र्युपनिषदि पुरुषः स्वयमभिदधति यत् सूर्ये वर्तमानोऽहमेव—

**हिरण्यमयेन पात्रेण सत्यस्यापिहितं मुखम्।**
**योऽसावादित्ये पुरुषः सोऽहम्।।**[२४]

सूर्यस्य रश्मिषु मनुष्यार्थं सर्वाणि तत्त्वान्युपस्थितानि। सर्वान् रोगान् दुरितानि च नाशयितुं सूर्योऽद्भुतशक्तिसम्पन्नः। तदैव तूच्यते- 'विश्वानि देव सवितुर्दुरितानि परासुव'। सूर्यस्य सम्यग्रूपेण सेवमानः किमपि खाद्यौजं (विटामिन) पृथक्त्वेन ग्रहीतुं नापेक्षते। सूर्ये तत्त्वानां समग्रता विद्यते।

उपनिषत्सु सूर्योपासनाभिः सूर्यस्याप्रतिमा महत्ता प्रदर्शिता। अनेकासु उपनिषत्सु सूर्यस्य रहस्यमवगन्तुं बहुविधाः सूर्योपासना उल्लिखिताः। यथा 'ब्रह्मविज्ञानम्'[२५], 'दहरविद्या'[२६], मधुविद्या[२७], उपकोसलविद्या[२८], मन्थविद्या[२९], पंचाग्निविद्या[३०], सूर्यरूप-ओङ्कारोपासना[३१], आदित्यदृष्ट्यामासोपासना[३२], त्रिकालसन्ध्योपासना[३३], सूर्योपस्थानम्[३४], महावाक्यविधिना सूर्ये अद्वैतब्रह्मणो भावनोपासना च[३५]। एवंविधा अन्या उपासना अपि उपनिषत्सु विस्तरेणाभिहिता यासामुपासनेनेष्ट- प्राप्तिर्मोक्षश्चापि लभ्यते। तैत्तिरीयोपनिषदि कथितं यद्योऽयं महोऽर्थात् सूर्यः स एव ब्रह्म, स एवात्मा, स एवादित्योऽन्ये सर्वे देवास्तस्यांगानि। अनेनैवादित्येन महिमान्विताः सर्वे लोकाः।[३६]

प्रातः काले उदयतः सूर्यस्य दर्शनमात्रेण अनेकेभ्यो हृत्सम्बन्धिभ्यो रोगेभ्यो निवृत्तिरवाप्यते। एवं शरीरस्य कान्तिक्षयकृतोऽनेके रोगा अपि समाप्यन्ते।[३७] ऋग्वेदस्य प्रथममण्डलस्य पंचाशत्तमस्य सूक्तस्यैकादशत-स्त्रयोदशपर्यन्तं मन्त्रा रोगघ्नोपनिषदिति संज्ञकाः। अस्या नित्यपाठेनाधि भौतिकाधिदैहिकाध्यात्मिकाख्यानां त्रिविधानां तापानां शमनं जायते।[३८]

सूर्यः सर्वान् रोगान्नाशयति। रोगः कृमीन् क्षाययति, उदयन् सूर्यः क्षमो मस्तिष्कस्य सर्वान् विकारान् समूलमुत्पाटयितुम्। विलक्षणरश्मिमान् सूर्योऽनेकास्तमिस्रा नाशयितुं धारयत्युग्रं सामर्थ्यम्। प्रणिनामाद्यन्तं पोषणं सूर्यस्यांके एव।[३९]

अथर्ववेदीयप्रथमकाण्डस्य द्वाविंशतितमं सूक्तं हृद्रोगकामलानाशनसूक्तमिति नाम्ना ख्यातम्। अस्मिन् सूर्यं सर्वरोगनाशकमित्युदीरितम्।[४०] अथर्ववेदस्य द्वितीयकाण्डस्यैक विंशतितमं सूक्तं, शत्रुनाशनं सूक्तम् अस्मिन्

पंचमन्त्रात्मके सूक्ते सूर्यस्य महदैश्वर्यं स्तुतम्। उदयाचलमस्ताचलंच स्पृशन् सूर्यो देवः स्वरश्मिभिः पृथिव्याः कीटाणून् समाप्नोति।[४१] अथर्ववेदीयं कृमिनाशनसूक्तमादित्याय समर्पितम्। अत्र सूर्यस्य सर्वरोगनाशकता वर्णिता।

वैज्ञानिकानां दृष्टौ सूर्यरश्मयोऽनेकेषां रोगाणां समूलनाशिन्यः। ऋग्वेदस्य प्रथममण्डलस्य पंचाशत्तमस्य सूक्तस्य केचित् मन्त्रा वर्णन्त्येवं यत् सूर्य उदित्वानन्तमाकाशं चारुह्य हृत्स्थान् रोगान् पीतवर्णस्य रोगान् शरीरस्य चान्यान् रोगान् विनष्टङ्करोति। रोगमुमुक्षव इमान् मन्त्रानुपासते। प्रत्येकेन सूर्योपासकेन स्वाधिव्याधिशान्तये इमे एव मन्त्राः जप्यन्ते। एतत्प्रमाणयता सायणेनोक्तं यदिमानेव मन्त्रां जपन् ऋषिः प्रस्कण्वश्चर्मरोगाद् मुक्तिं लेभे।

सूर्यस्य शक्तीः संचेतुमद्यतना वैज्ञानिकाः किंचित् प्रयतमानाः सन्ति येनासन्ने भविष्ये मानवानाङ्कृते जायमानानां समस्यानां यथा-विद्युज्जलाङ्गारैधसादीनां शमनमृजुतयैव भविष्यति। सूर्याज्जातैः प्राकृतिकसंसाधनैः प्रदूषणमपि निवृत्तिराप्स्यते। अमेरिकादेशस्य टाइमपत्रिकानुसारेणाद्य तत्रात्येषु पंचायुते (५०,०००) गृहेषु सूर्यशक्तियन्त्रमाध्यमेन प्रकाशो लभ्यते, भोजनं पच्यते गृहाय चौष्ण्यं दीयते। इजराइलदेशे लक्षद्वयाधिकेषु गृहेषु सूर्यशक्तिरेव प्रयुज्यते। जयपाणिदेशस्य प्रयुतद्वयं (२० लाख) गृहाणि सूर्यशक्तेरेव प्रकाशितानि। फ्रांसदेशस्य एकं विशालं यान्त्रिकशिल्पगृहं केवलं सूर्यस्य ऊर्जैव संचाल्यते। वैज्ञानिकानां मतमेतत् पृथिव्यां विद्यमाना सूर्यशक्तिर्यदि सम्यक्तया संचीयेत तर्हि विश्वेऽद्य यावद्विद्युदुत्पाद्यते तदपेक्षया लक्षगुणादप्यधिका विद्युदुत्पाद्येत। एवमनेकानि तथ्यानि सूर्यस्यानुपम शक्तेर्बोधकानि। अतएव सूर्ये ईश्वरत्वकल्पनस्य निराधारत्वन्न।

उत्कृष्टतमं वैज्ञानिकदर्शनम्, चिन्तनम्, मननिष्कर्षः, शास्त्राणां च सारभूतस्य च मनीषिणामचिन्त्यस्य सद्रूपिणो ब्रह्मणः सैद्धान्तिकी प्रतिष्ठेतन्निश्चयेनोद्घोषयति यदखिलब्रह्माण्डस्य संचालिकेका विशिष्टा शक्तिः एतद्वैतत्। वस्तुतः तस्यैव परोक्षब्रह्मणस्तस्यैच्छाशक्तेस्तस्य विलासानन्दयोः स्थलमिदं चराचरजगत्यदनन्तब्रह्माण्डे व्यक्तम्। तद् ब्रह्म यद्यपि सर्वत्र परिव्याप्तं तथाप्यत्यन्तगूढत्वात् सूक्ष्मदर्शिभिरेव दृश्यते।[४२] तस्यैव दर्शनदिशि निरन्तरं प्रगतिशीलमाधुनिकं वैज्ञानिकं चिन्तनं तस्य विशिष्टशक्तेः सामर्थ्यकोषमुद्घाटयन्नस्ति। प्राच्यपाश्चात्ययोर्विलक्षणोऽयं समन्वयो हृदयेनाभिनन्दनीयः।

इत्थं सर्वसामर्थ्यान्वितस्य यस्य परोक्षब्रह्मणः कल्पनं वयमादिकालादेव कुर्वन्त आस्महे तासां सर्वासां शक्तीनां सामर्थ्यसम्पन्नस्तस्य साक्षादवतारः प्रत्यक्षं सूर्य एव। अतः सर्वव्यापकः सर्वप्रकाशको जीवनदाता प्राणिनां चात्मा एष सूर्य एव योऽस्माभिः प्रत्यक्षेश्वरो वक्तुं शक्यते 'असावादित्यो ब्रह्म'। सिद्धान्तस्यैतस्य पुरस्कर्तुः शतपथब्राह्मणस्य वाक्यमेतदप्यस्ति- 'आत्मायाजीश्रेयान्देवयाजिनः' अर्थात् परोक्षात् प्रत्यक्षस्योपासना विशिष्यते।

◆

## सन्दर्भाः


१. निरुक्तम् (७.४.२.).
२. निरुक्तम् (७.४.२.).
३. प्रश्नोप. (१.८).
४. बृहद्दे. (१.६१).
५. ऋग्वेद : (७.३२.२).
६. अथर्व. (१.४.१).
७. अथर्व. (१.४.१).
८. यजु. (३१.२०).
९. यजु. (४.२५).
१०. बृ. (अ. २/ब्रा. २१).
११. अथर्ववेद. (३.३१.७).
१२. यजु. (२३.४८).
१३. यजु. (२३.४६).
१४. ना.उ. (३.१४.१५).
१५. ऋग्वेद (२.२७.८).
१६. सूर्योपनिषद्।
१७. सूर्यसिद्धान्तम्।
१८. ऋग्वेद (१.३५.७).
१९. ऋग्वेद (१.३५.१०).
२०. यजु. (२.२६).
२१. ऋग्वेद (१.५०.२).
२२. ऋग्वेद (१.५०.४).
२३. अथर्व. (३.१६.५).
२४. मै. उप. (६.३५).
२५. छा. प्रपा. ३ (खण्ड ११ से २१ तक).
२६. छा. प्रपा. ८ (खण्ड १).
२७. छा. प्रपा. ३ (खण्ड १ से १२ तक).
२८. बृ. अ. ६ (ब्रा. ३).
२९. छा. प्रपा. ४ (खण्ड १०).
३०. बृ. अ. ६ (ब्रा. ३).
३१. छा. प्रपा. १ (खण्ड ५).
३२. छा. प्रपा. २ (खण्ड ९).
३३. कौषि. ब्रा. उप. २/५, बृ. अ. ५ ब्रा. १४.
३४. छा. उप. (खण्ड ८).
३५. ई. १६ मु. उप. (२.२.९).
३६. तै. उप. (१.५०.११-३).
३७. ऋग्वेद (१.५०.११).
३८. ऋग्वेद (१.५०.११-१३).
३९. ऋग्वेद (१.३५.३-५).
४०. अथर्व. (१.२२).
४१. अथर्व. (२.३२.१.).
४२. कठ. उ. (३.२१).


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAṀ
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 66-68

# पाणिनीये व्याकरणे शब्दतत्त्व-मीमांसा

**डॉ. उपेन्द्र देव पाण्डेयः***

अस्मिन् जगति यावन्ती व्यवहारा व्यवह्रियमाण लक्ष्यन्ते, तेषां मूलकारणं शब्दः। सर्वो हि शब्देन स्वाभिप्रायं प्रकटयति, अन्याभिप्रायञ्च शब्दश्रवणेन विजानाति। यतो हि सर्वाशब्दाभिधेयश्च अर्थः। यथा यदा कश्चित् पुमान् पुरोवर्तिनं सास्नादिमन्तं पिण्डं पश्यति, तदा स गौरयमि'ति ब्रूते। तेने च सास्ना-लाङ्गूल-ककुद-खुर-विषाणीत्यर्थः प्रतीयते। तथा च येनोच्चारितेन यस्यार्थस्याभिव्यक्तिः, स एव शब्द इति निष्कर्षः। यथाऽऽह कैयटः—

**सर्वार्थप्रत्यायनशक्तियुक्तो हि शब्दः, सर्वशब्दप्रत्यय्यशक्तियुक्तश्चार्थः।**[१]

स च शब्दः श्रोत्रेण गृह्यते। अतएव 'श्रावणः शब्दः' इति कथ्यते। महर्षिः कणादोऽप्येवमेवाह- **श्रोत्रग्रहणोयोऽर्थः स शब्दः**[२] इति।

उपरिनिर्दिष्टस्य मतस्य पोषणं महर्षि पतंजलिरपि करोति- **श्रोत्रोपलब्धिर्बुद्धिर्निर्ग्राह्यः प्रयोगेणाऽभिज्वलित आकाशदेशः शब्दः।**[३] श्रोत्रेण यस्य ग्रहणं भवति, स 'ध्वनिरि'ति कथ्यते। ध्वनेर्ग्रहणं श्रोत्रमन्तरा न ह्यन्येन केनचिदुपायेन सम्भवति, केवलं श्रोत्रेणैव। अतएव महाभाष्यकारः - अमुमेवा**प्रतीतपदार्थको लोके ध्वनिः शब्द**[४] **इत्युच्यते**। अस्य व्याख्यानं कुर्वन् नागेशो लिखति- **'लोके व्यवहर्तृषु पदार्थबोधकत्वेन प्रसिद्धः, श्रोत्रेन्द्रियग्राह्यत्वाद् वर्णरूपध्वनिसमूह एव शब्दः'** इति। ध्वनिरूपेण शब्देनाऽभिव्यञ्जितो हि यः शब्दः य स्फोटरूप इति शाब्दिकानां सिद्धान्तः। शाब्दिको हि ब्रूते यद् ध्वनिः श्रोत्रेन्द्रियप्रणालिकयाऽन्तः प्रविश्य स्फोटमभिव्यनक्ति। अभिव्यञ्जितः स्फोटोऽर्थस्य बोधको भवति। यथाऽऽह महर्षि पतञ्जलिः- **येनोच्चारितेन सास्ना-लाङ्गूल-ककुद-खुर-विषाणिनां सम्प्रत्ययो भवति स शब्दः**[५] इति। अत्र येन = ध्वनिना, उच्चारितेन=अभिव्यक्तेनेति बोध्यम्।

यद्यपि नैयायिक-वैशेषिकौ स्फोटात्मकं शब्दं न स्वीकुर्वाते। यतो हि तौ मन्ये यद्वर्णाऽतिरिक्तः कश्चन पदात्मा, वाक्यात्मा वा स्फोटः प्रतीयेत चेत्तर्हि स्वीक्रियतां वर्णादिभ्योऽतिरिक्तः स्फोटः। किन्तु न च तथा प्रतीयते, येनैतेभ्योऽतिरिक्तः पदात्मा, वाक्यात्मा वा स्फोटः शब्दः कल्प्येत। वर्णनामुच्चरितप्रध्वसितत्वेनापि संकेतबलादेव अर्थस्य स्फुटिर्भवति, न तु स्फोटात् तस्याऽसत्त्वात्। बहूनां वर्णानामेकार्थप्रतिपादकत्वमेकं धर्मं स्वीकृत्य 'एकं पदम्' 'एकं वाक्यम्' इति भाक्तो व्यवहारः प्रवर्तत[६] इति।

सांख्योऽपि पूर्वोक्तमेव मतं पुष्णाति। यतो हि स ब्रवीति यत् ''स्फोटरूपः शब्दो भवन्मतेऽस्तीति चेत् स लक्ष्यते, अहोस्विन्न? लक्ष्यते चेत्तर्हि केनेति? यदि च वर्णसमुदायेन आनुपूर्वीविशेषेण सोऽभिव्यज्यते, तर्हि

* अतिथि प्राध्यापकः संस्कृतविभागे, महात्मागान्धी काशीविद्यापीठ, वाराणसी.

वर्णाऽनुपूर्वीविशेषेभ्यो व्यतिरिक्तः स्फोटः कल्प्यते। यदि स च स्फोटो वर्णाऽनुपूर्वीविशेषेभ्यो न प्रतीयते इति मन्येत, तर्हि न ह्यप्रतीतेन स्फोटेनाऽर्थप्रत्यायकत्वं स्यात्। यतो हि सत एव कारणात् कार्यस्योत्पत्तिर्भवति। न ह्यसतः कारणात् कार्यस्योत्पत्तिर्दृश्यते। तस्माद् वर्णातिरिक्तो नास्ति कश्चन स्फोटरूपः शब्दः।[७]

तथाहि शाब्दिको वर्णादिभ्यो व्यतिरिक्तः स्फोटोऽस्तीति मनुते। पूर्वोद्भाविता दोषाश्च तेन इत्थं दूरीक्रियन्ते- 'गौरित्यत्र त्रयो वर्णाः, गकारऔकारविसर्ग इति। अत्र प्रतिवर्णाः सास्नादिमन्तमर्थं बोधयन्तीति मन्यते चेतर्हि गकारेणैव सास्नादिमद्व्यक्तेर्बोधे सति औकारादिनां वैयर्थ्यं स्यात्। गकारादयः सम्मिलिता एव वर्णाः सास्नादिमन्तमर्थं प्रत्याययन्तीत्युच्येत, तर्हि उच्चरितप्रध्वंसाभ्यां वर्णानां युगपदव्यवस्थानाभावादेतेषां संहतत्व न सेत्स्यतीति। यतो हि यो वर्णा यस्मिन् क्षणे समुच्चरितः, स द्वितीये क्षणे न तिष्ठति, क्षणस्थायित्वात्।

किञ्च येन यत्नेन एको वर्ण उच्चरितो भवति, तेनैव यत्नेन अपरस्य वर्णस्योच्चारणं न सम्भवति। यतो ह्युच्चरितस्य वर्णस्य नाशेऽभिव्यक्तौ वा जाते तेन सह यत्नोऽप्युपरतो भवति। पुनरन्यस्य वर्णस्य उच्चारणायाऽन्यो यत्न उपादीयते। तेनैतेन यत्नेन अन्यो वर्णो द्वितीयस्तृतीयो वा समुच्चरितो भवति। तथा च एकैकवर्णवर्तिनी वाक् यावद् गकारे तिष्ठति, न तावदौकारे, न वा विसर्जनीये। यावदौकारे, न तावद् विसर्जनीये, गकारे वा। यावद् विसर्जनीये न तावद् गकारे, नवौकारे व्यवतिष्ठते। यथाऽऽह महर्षि पतञ्जलिः—

**येन यत्नेनैको वर्ण उच्चार्यते विच्छिन्ने वर्ण उपसंहृत्य तमन्यमुपादाय द्वितीयः प्रयुज्यते, तथा तृतीयस्तथा चतुर्थः, एकैकवर्णवर्त्तिनी वाक्। न युगपदुच्चारयति। 'गौरि'ति यावत् गकारे वाग् वर्तते, नौकारे, न विसर्जनीये। यावदौकारे, न गकारे, न विसर्जनीये। यावद् विसर्जनीये न गकारे, नौकारे, उच्चरित प्रध्वंसित्वात्। उच्चरितप्रध्वंसिनः खल्वपि वर्णाः। उच्चरितः प्रध्वस्तः। अथाऽपरः प्रयुज्यते, न वर्णो वर्णस्य सहायः।**[८]

किञ्च उत्तरवर्णप्रत्यक्षकालेऽनुभूतानां पूर्वपूर्ववर्णानां संस्कारमहिम्नाऽव्यहितोत्तरत्वसम्बन्धेन पूर्वपूर्ववर्णवत्त्वमुत्तरोत्तरवर्णे गृह्यते। तथा च 'गौः' इत्यादौ गकारादिपूर्ववर्णानां औकाराद्युत्तरोत्तरवर्णेषु उपस्थानात् सास्नाद्यर्थकस्य पूर्व-पूर्ववर्णसहकृतचरमवर्णस्य प्रत्यायकत्वं सिद्धं भवति। तेनैतेन 'सरोरसः' 'दीनोनदी'त्यादौ विलक्षणबोधे पौर्वापर्यस्य विपर्यासोऽपि न भवति। यतो हि येन क्रमेण वर्णानामनुभवजन्यः संस्कारः, तेनैव क्रमेण पूर्वापूर्ववर्णा उत्तरोत्तरवर्णप्रत्यक्षकाले समुपस्थास्यतीति।

किञ्च पूर्वपूर्ववर्णजाः शब्दाः शब्दजशब्दन्यायेन चरमवर्णप्रत्यक्षपर्यन्तं जयमाना एव सन्तीति मन्येत, चेत्तर्हि 'अयं पूर्वोऽयं परः' इति व्यवहारस्य उच्छेदः स्यात्। यतो हि न हि नष्ट-विद्यमानयोः 'अयं पूर्वः, अयं परः' इति व्यवहार उत्पत्तुं प्रभवति, प्रत्युत द्वयोः सतोरेव। एवं सति 'सन् घटो जलवान्' इव 'नष्टो घटो जलवान्' इत्यपि स्यात्। न चैवं प्रतीतिसाक्षिको व्यवहारो दृश्यते।

अतो वर्णातिरिक्तो वर्णाभिऽभिव्यङ्ग्यो हृदयदेशस्थितो मध्यमायां यो नादांशो भागः, स एव स्फोटरूपः शब्दः। स चैकोऽखण्डः प्रतिवर्णेनाऽभिव्यज्यते, तथापि चरमवर्णाऽभिव्यक्तो यः स्फोटः स एव सम्प्रत्ययस्य कारणं भवति, न तु प्रतिवर्णाऽभिव्यक्तः स्फोटः। अत एवैकवर्णजाऽभिव्यक्तिजातोऽपि स्फोटो नायमभिव्यनक्ति किन्तु चरमर्णाभिव्यक्त एव स्फोटोऽर्थबोधने समर्थो भवति।

स्फोटो ह्यभिव्यञ्जकरूपप्रतिबिम्बनात् तद्रूपरूपितैव प्रत्यवभासते। यथा- जलचाञ्चल्येन चन्द्रप्रतिबिम्बमपि चलमेव गृह्यते। यथा वा स्फटिको जपाकुसुमसम्पर्कात् तदाकारेणैव भासते। एवमेव यथा मणिकृपाणदर्पणाद्यभिव्यञ्जकानां सान्निध्यात् मुखमपि दैर्घ्य वर्तुलाकारेण संलक्ष्यते, तथा स्फोटोऽपि अभिव्यञ्जकोपरागाताकारेणैव प्रतीयते। तथा

च येन चित्ते संस्कारास्तेनैव क्रमेण व्यञ्जकरूपरूपितता तस्येति स्वीकारान्न 'सरो रसः, दीनो नदी, कुब्जखञ्जः खञ्जकुब्जः' इत्यत्राऽविलक्षणबोधः। अयञ्च स्फोट अनन्तरत्याच्छ्रोत्रग्राह्य-वैखरीसंस्कृताऽन्तःकरणग्राह्य एवेति निर्धायते। यथाह आचार्य पतञ्जलिः - **स्फोटः शब्दः**[९] इति।

एतादृशः स्फोटरूपस्य शब्दस्य स्वीकारादेव 'कृपो रोलः'[१०] इति सूत्रेण 'कल्पते' इत्यादौ रेफस्य लत्वविधिः सिद्ध्यति। यथाह पतञ्जलिः— अथवोभयतः स्फोटमात्रं निर्दिश्यतेश्रुतेर्लश्रुतिर्भवतीति[११] इति।

एवञ्च द्वौ शब्दौ स्तः। तत्रैको ध्वनिरूपः श्रोत्रग्राह्यः। अपरः श्रोत्रगृहीतेन ध्वनिनाऽभिव्यक्तो हृदयदेशस्थितः स्फोटरूपः। श्रोत्रगृहीतध्वनिनाऽभिव्यञ्जित आन्तरः स्फोटोऽर्थ बोधयति। अमुमेवाऽऽशयमादाय भर्तृहरिर्ब्रूते—

**द्वावुपादानशब्देषु शब्दौ शब्दविदो विदुः।**
**एको निमित्तं शब्दानामपरोऽर्थे प्रयुज्यते।।**[१२]

अस्य व्याख्यानं कुर्वल्लिखति पं. रघुनाथशर्मा- 'स्फोटोत्मकशब्दाऽभिव्यञ्जको ध्वनिर्विशेषरूप एकः शब्दः, अर्थप्रत्यायकश्च स्फोटपदाऽभिधेयोऽपर इति द्वौ शब्दौ'[१३] इति।

व्याकरणतन्त्रे शब्दस्यैव प्राधान्यम्। शब्दविचारा बहवः उपबृहिताः भतृहरिणा वाक्यपदीये। भतृहरिणा शब्दस्य ब्रह्मत्वमङ्गीकृतम्। एतस्यैव ब्रह्मणो विवर्तरूपेणेदं जगद् भासते। यथाऽद्वैतवादिनो शंकरप्रभृयो विद्वांसः तुरीयब्रह्मणो विवर्तरूपमिदं जगद् प्रत्यवभासते इति वदन्ति, तथैव शाब्दिकैः शब्दस्यैव तुरीयब्रह्माभिधेयत्वं ब्रह्मत्वं स्थापितम्। यथाह भतृहरि—

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽथभावेन प्रक्रिया जगतो यतः।।**[१४]

◆

## सन्दर्भाः


१. महाभाष्यप्रदीपः ११/६/८.
२. वैशेषिकः सूत्रः २/२/२१.
३. महाभाष्यम् पस्पशाह्निकः।
४. महाभाष्यम् पस्पशाह्निकः।
५. महाभाष्यम् पस्पशाह्निकः।
६. वैशेषिक सूत्रः २/२/२१ उपस्कार टीका।
७. सांख्यप्रवचनभाष्यम् ५/२७.
८. महाभाष्यम् पस्पशाह्निकः १/४/१०९.
९. महाभाष्यम् पस्पशाह्निकः १/१/७०.
१०. पा.सू. ८/२/१८.
११. महाभाष्यम् मा. सू. १/१.
१२. वाक्यपदीयः ब्रह्माण्डम् ४३.
१३. अम्बाकर्त्री वाक्यपदीयः ब्रह्मकाण्डम् ४४.
१४. वाक्यपदीयः ब्रह्माण्डम् १.


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 69-73

# शाब्दिकनये धात्वर्थमीमांसा

श्रीनिवास स्वाई*

इह खलु सर्वेषां यत्सर्वासां भारतीयभाषाणां जननी संस्कृतभाषेति। यस्यां महान् शब्दविस्तारः। यस्यां विपुलसाहित्यम्। लौकिकवैदिकरूपेण च भाषेयं द्वैविध्यमादधाति। इयं च न केवलं समृद्धा, अपि तु सर्वाङ्गपूर्णाऽपि। यद्यपि संस्कृतभाषाया व्याकरणमिन्द्राद्यनेकप्राचीनवैयाकरणैरूपनिबद्धम्, तथापि लौकिकवैदिकरूपेण सर्वाङ्गपूर्णं व्याकरणं महर्षिपाणिनेरेवेति सर्वविदितं सर्वसम्मतञ्च। अत एव शाब्दिकवरेण्यैः श्रीनागेशभट्टैरस्यैव व्याकरणस्य वेदाङ्गत्वम्, नान्येषामित्युघोषितम्। आधुनिकसंस्कृतसमाजेऽपि पाणिनिव्याकरणस्यैव प्रचारः प्रसारः समादरश्च वर्तते। अन्यैरूपनिबद्धं व्याकरणं लुप्तप्रायमेवेति। तच्च व्याकरणं महर्षिकात्यायनस्य वार्तिकसमूहेन तथा च पातञ्जलमहाभाष्येण गौरवान्वितं वर्तते।

पाणिनिव्याकरणमेवाधारीकृत्य प्राचीननवीनवैयाकरणैरपि परमताक्षेपप्रत्याक्षेपनिराकरणपूर्वकं बहवो ग्रन्थाः रचिताः। तेष्वेव श्रीभट्टोजि दीक्षितविरचितकारिकाव्याख्यानभूतस्य, श्रीकौण्डभट्टरचितस्य वैयाकरणभूषणसारस्य, श्रीनागेशभट्टविरचितस्य वैयाकरणसिद्धान्तलघुमञ्जूषायाश्च सिद्धान्तमाश्रित्य शाब्दिकनये धात्वर्थमीमांसात्मको लघुनिबन्धोऽयमायासितः। तथा च पूर्वं धातुशब्दानामैतिहासिकविवेचनं प्रस्तौमि। अयञ्च धातुशब्दो **'भूवादयो धातवः'**[१] इति सूत्रे महर्षिपाणिनिनाऽष्टाध्यायां संज्ञारूपेण स्वीकृतोऽस्ति। पाणिनिव्याकरणे संज्ञानां भेदद्वयं दृश्यते। प्रथममन्वर्थरूपं द्वितीयं कार्यनिर्वाहकरूपञ्च। अन्वर्थास्संज्ञास्संज्ञिनां समूलमर्थमनुगच्छन्ति, यथा- अनुनासिक-संयोग-प्रातिपदिकादयः। कार्यनिर्वाहकसांज्ञाश्च केवलं कार्यमेव निर्वहन्ति यथा-टि-घु-भ-घेत्यादयः। आसामेव संज्ञानां महासंज्ञालघुसंज्ञारूपेणापि प्रयोगो दृश्यते। महासंज्ञाकरणमेवान्वर्थसंज्ञात्वं सूचयतीति शब्दकौस्तुभे **'महासंज्ञाकरणमन्वर्थलाभार्थम्'** इति **'प्रथमानिर्दिष्टं समास उपसर्जनम्'** इति सूत्रव्याख्यावसरे श्री भट्टोजिदीक्षितैः स्वीकृतम्। यद्यपि सम्प्रदानसंज्ञाव्याख्याने **'रजकाय वस्त्रं ददाति'** इति प्रयोगमनुसृत्य 'नान्वर्थतायामाग्रहः' इति महाभाष्यकारस्य शब्दकौस्तुभे च **'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्'**[२] इति सूत्रव्याख्यावसरे 'महासंज्ञाकरणं प्राचामनुरोधेन इति भट्टोजिदीक्षितस्यापि वचनेन न सर्वत्रान्वर्थलाभ इति प्रतीयते बहुशो दृश्यते च।'

आख्यातशब्दश्च न पाणिनेः संज्ञाः किन्तु महर्षिणा 'मयूरव्यंसकादयश्च' इत्यत्र **'आख्यामाख्यातेन क्रिया सातत्ये'** इति गणसूत्रं पठता अङ्गीकृतः। मन्ये, इयं संज्ञा प्राचीनवैयाकरणानामेव। यतो बहुशः प्राचीनसंज्ञानामप्येतस्मिन् पाणिनीयाष्टके प्रयोगो दृश्यते। यथा- प्रथमादयः प्राचां संज्ञास्ताभिरिहापि व्यवहारः। आङिति टासंज्ञा प्राचामिति वैयाकरणसिद्धान्तकौमुद्यां यत्र तत्रापि श्रीभट्टोजिदीक्षितेनोच्यते। अनयोः शब्दयोः

---

* शोधच्छात्रः राष्ट्रियसंस्कृतसंस्थानम् भोपालपरिसरः.

सर्वप्रथमं संस्कृतवाङ्मयस्य कस्मिन् ग्रन्थे कस्मिन्नर्थे प्रयोगो विद्यत इत्यालोच्यते समासेन। सर्वप्रथमं ऋग्वेदे धातुशब्दः एवं पठितः—

**एवा महस्तुविजातस्तु विषमान्वृहस्पतिर्वृषभो धायि देवः।**
**स नः स्तुतो वीरवद्धातु गोमत्**[३] ....................।।

इति ऋग्वेदस्याष्टममन्त्रे धातुशब्दस्य करोत्यर्थे प्रयोगो वर्तते। इदं सायाणाचार्यस्य मतम्। किन्तु ऋग्वेदस्यैव पञ्चममण्डलस्य चतुश्चत्वारिंशत्तमे सूक्ते— **'अन्त्यं हविः सचते सच्च धातु चारिष्टणातुः स होता सहोभरिः'** इति तृतीये मन्त्रे धातुशब्दस्य नपुसंकलिङ्गे प्रथमान्तः प्रयोगो दृश्यते। अस्यार्थोऽपि सायणाचार्येण 'धातुः = धारकम्', इति भाष्यं कुर्वता धारणकर्तृत्वमेव निश्चीयते।

प्रायोऽन्येऽपि वेदभाष्यकर्तारोऽस्मिन्नेवार्थे सहमतिं प्रकटितवन्तः। अनया पर्यालोचनया धातुशब्दस्य केवलमेकस्मिन् स्थाने कर्तृकारके धारकत्वशक्तिप्रधाने प्रयोगोऽस्तीति लभ्यते। अन्यत्र मण्डले मन्त्रे तु क्रियापरकत्वमेव धातुशब्दस्य प्रयोगो दृश्यते। किन्तु क्रियापरकत्वेऽपि सर्वत्र प्रकृतिः 'धा' एव। अतः समन्वयात्मिकदृष्ट्या धारकत्वम्, कर्तृत्वम्, स्थापनकर्तृत्वं वा प्रायः समानमिति न तत्र कश्चित्विशेषभेदो वर्तते।

इदानीं संस्कृतवाङ्मये कस्मिन्नर्थे केन रूपेण धात्वर्थ गृहीतोऽभूदित्युत्तरोत्तरं महर्षिनागेशभट्टकालपर्यन्तं धात्वर्थस्य प्रवाहे कुत्र कुत्र भिन्नार्थकत्वं, समानार्थकत्वं वेति? यदि भिन्नार्थकत्वम्, तर्हि युक्त्या समन्वयो भवेन्न वेति विचार्यते। तत्र वादिनां विवादाभावेऽप्यखिलनामकरणभूतस्य धातोरर्थविषये विवदन्त एव वादिनः। तत्र केचन फलमात्रं धात्वर्थः, प्रत्ययार्थो व्यापारः, फलव्यापारौ धातुवाच्यौ, भावनाऽऽव्याप्तार्थः, केचित्तु फलमात्रं धात्वर्थः, आख्यातार्थः, कृतिः, फलव्यापारौ धातुवाच्यौ कृतिराख्यातार्थ इति स्वीकुर्वन्ति मीमांसान्यायसिद्धान्तानुसारिणः।

**मीमांसकमतम्**

फलमात्रं धात्वर्थो व्यापारः प्रत्ययार्थ इत्युद्बोधयन्ति मीमांसकेषु मण्डनमिश्राः। अयमभिप्रायस्तेषाम्-फलमेव धात्वर्थः। गम्, त्यज् इत्यादिधातूनामुत्तरदेशसंयोगादयोऽर्थाः। व्यापारस्तु प्रत्ययार्थः। तत्र फलस्यानुकूलत्वसम्बन्धेन व्यापारेऽन्वयः। एवञ्च लडाद्यर्थवर्तमानत्वादिकालानामपि व्यापार एवान्वय एकपदोपात्तत्वात्। प्रतिपादितञ्चैतद् धात्वर्थनिरूपणावसरे खण्डदेवेन- **''मण्डनमिश्राः तावत् विक्लित्यादिरूपं फलमेव धात्वर्थः, तदनुकूलफूत्कारादिरुपो व्यापारसंघस्तु सर्वोऽपि व्यापारत्वेन प्रत्ययार्थः। फलस्य च तं प्रति प्रकारत्वमित्याहुः।''**[४]

परमलघुमञ्जूषायां नागेशभट्टेनापि प्रतिपादितञ्चैतद् धात्वर्थनिरूपणावसरे- **'यत्तु मीमांसकाः फलं धात्वर्थो व्यापारः प्रत्ययार्थ इति वदन्ति'**[५] तत्र मीमांसकपदेन मण्डनमिश्र एव बोद्धव्यः, मीमांसकानामन्येषामाख्यातार्थभावनेति मतस्य प्रसिद्धत्वात्।

ननु मण्डनमिश्रसम्मते फलस्य धात्वर्थत्वे संयोगरूपफलस्य ग्रामे विद्यमानत्वात् यथा 'ग्रामः संयोगवान्' इति प्रयोगः, तथैव 'ग्रामो गमनवान्' इति प्रयोगापत्तिः, धात्वर्थसंयोगरूपफलस्य ग्रामे विद्यमानत्वात्। आपत्तिरियमुपपादिता कौण्डभट्टेनापि भूषणसारे- **''फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवान् इति प्रयोगापत्तिः संयोगाश्रयत्वात्''**[६] तस्मात् फलमात्रस्य धात्वर्थत्वे न सम्भवतीति चेदुच्यते मण्डनमिश्रानुयायिभिः-**'ग्रामो गमनवान्'** इत्यत्र ल्युट् प्रत्ययस्य व्यापारार्थकत्वेन गमनपदस्योत्तरदेशसंयोगानुकूलव्यापारवाचकत्वेन च ग्रामे व्यापारस्याविद्यमानत्वेन दोषाभाव एव। तस्मात् 'फलमात्रं धात्वर्थः' इति मतं समीचीनमेव।

**मण्डनमिश्रमतखण्डनम्**

फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवान् इति प्रयोगापत्तेः कथञ्चित् वारणसम्भवेऽपि 'गम्यर्थवान् ग्रामः' इति प्रयोगापत्तिः गम् धात्वर्थजन्यसंयोगाश्रयो ग्रामः इतीष्टप्रयोगानुपपत्तेश्च। प्रतिपादितश्चैतत् खण्डदेवेनाऽपि मण्डनमिश्रमतखण्डनावसरे **'गम्यर्थवान् ग्राम इति प्रयोगस्यैवमप्यापत्तेः, गम्यर्थजन्यसंयोगाश्रयो ग्राम इति प्रयोगापत्तेश्च।'**[७]

किञ्च गच्छति, पचतीत्यादौ प्रत्ययस्य व्यापारार्थकत्वमपि न सम्भवति, **'लः कर्मणि च भावे चाकर्मकेभ्यः'**[८] इति पाणिन्यनुशासनविरोधात्। 'तथोक्तसूत्रेण कर्तरि कर्मणि च लकारे विधानद्वारा तयोरेव लकाराणां तत्स्थानिकादेशानां वा शक्तिः प्रतिपाद्यते।

प्रभाकरस्तु फलमेव धात्वर्थः, भावना तु वाच्यैव। जातौ शक्तिं स्वीकुर्वन्तःते आश्रयमन्तरा जात्यन्यथाऽनुपपत्या समवायेन स्वाश्रयीभूतां व्यक्तिमाक्षिप्य यथा तस्याः शाब्दवोधविषयकं प्राधान्यञ्च मन्यन्ते, तथापि लिङ्त्वाख्यातप्रत्ययाभ्यामाक्षिप्त भावनाया एव प्राधान्यं स्वीकुर्वन्ति। सा च भावना द्विधा- शब्दीभावना, आर्थीभावना। तत्र प्रकृत्यनुकूलो भावयितुं व्यापारविशेषः शाब्दीभावना। सा च लिङ्त्वांशेनोच्यते। लिङ्श्रवणेऽयं मां प्रवर्तयति, मत्प्रवृत्यनुकूलव्यापारवानिति नियमेन प्रतीतेः। प्रयोजनेच्छाक्रियाविशेषो व्यापार आर्थीभावना। सा चाख्याततत्वांशेनोच्यते, आख्यातसामान्यस्य व्यापारवाचित्वात्। साऽप्यंशत्रयमेपक्षते। साध्यं साधनमितिकर्तव्यता च। किं भावयेत्, केन भावयेत्, कथं भावयेदिति।

**नैयायिकानां मतम्**

धात्वर्थविचारप्रसङ्गे नैयायिकानामपि मतद्वयमुपलभ्यते। तत्र प्राचीनन्यायमतानुसारिणस्तु व्यापारमात्रस्य धात्वर्थत्वं स्वीकुर्वन्ति। तथा चोक्तं व्युत्पत्तिवादे- **'व्यापारमात्रस्य धात्वर्थत्वात्'**[९] इति।

ग्रामं गच्छतीत्यादौ व्यापारमात्रं धात्वर्थः, फलञ्च द्वितीयार्थः, आख्यातार्थस्तु कृतिः। तत्र द्वितीयार्थस्य फलस्य प्रकृत्यर्थे निष्ठत्वसम्बन्धेन, धात्वर्थव्यापारे चानुकूलत्वसम्बन्धेनान्वयः। धात्वर्थव्यापारस्तु प्रत्ययार्थे कृतौ विशेषणम्, प्रकृत्यर्थप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यात्। एवञ्च ग्रामनिष्ठसंयोगानुकूलव्यापारानुकूलकृतिमान् इति बोधः।

न चैवं व्यापारमात्रस्य धात्वर्थत्वे 'त्यजति', 'गच्छति', इत्यादौ समानबोधापत्तिः, एवञ्च त्यागादितात्पर्येण गमनादिशब्दप्रयोगापत्तिश्च स्यात्। तत्र तत्तत्फलविशिष्टव्यापारे धातोर्लक्षणास्वीकारेणोक्तापत्तिवारणं न समीचीनम्, लक्षणास्वीकारे गौरवादिति वाच्यम्, तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यकल्पनेनादोषात्। प्रतिपादितश्चैतद् गदाधरेणापि- **''कर्मप्रत्ययासमभिव्याहृतत्यागगमनादिपदस्य तत्तत्फलावच्छिन्नव्यापारेऽनादितात्पर्यं कल्प्यते, न तु केवलव्यापारे। अनादितात्पर्यमेव च स्वारसिकप्रयोगनियामकमिति एकार्थता तात्पर्येण प्रामाणिकानां स्वारसिको न त्यागगमनादिप्रयोगः**[१०] **इति''**।

नव्यनैयायिकास्तु फलव्यापारयोर्धातोः शक्तिं स्वीकुर्वन्ति, आख्यातार्थश्च कृतिरेव तन्मते। नैयायिकमतमुपपादयता नागेशेनाप्ययुक्तम्- **'यत्तु तार्किकाः फलव्यापारौ धात्वर्थः। लकाराणां कृतावेव शक्तिर्लाघवान् न तु कर्तरिकृतिमतः कर्तृत्वेन तत्र शक्तौ गौरवात्। प्रथमान्तपदेनैव तल्लाभाच्च'**[११] इति।

मीमांसकमतपर्यालोचनावसरे व्यापारमात्रस्य धात्वर्थत्वरूपस्य सिद्धान्तस्यास्मिन्नेव निबन्धे पूर्वं खण्डिततत्वात् प्राचीननैयायिकभिमतो धात्वर्थविषयकः सिद्धान्तस्तु दूषित एव। नव्यनैयायिकमते सिद्धान्ते धात्वर्थविषये न

कश्चन विरोधः, किन्तु तत्सम्मत आख्यातार्थः कृतिः, प्रथमान्तार्थमुख्यविशेष्यकबोधरुपः सिद्धान्तो बहुदोषदूषितत्वात् खण्डितो नागेशेन कौण्डभट्टेन च, किन्तु धात्वर्थविषयकेऽस्मिन्निबन्धे तस्यानुपयोगित्वाद् विस्तार भयाच्च न विचार्यते।

**वैयाकरणानां सम्मतिः**

वैयाकरणास्तु फलव्यापारयोर्धातुवाच्यत्वं स्वीकुर्वन्ति। आख्यातार्थश्च कतृकर्मणी। तत्राख्यातार्थकर्तुश्चैत्रा-दिनाऽभेदेनभेदेनान्वयः, फलञ्चानुकूलत्वसम्बन्धेन व्यापारे विशेषणम्, आख्यातार्थकर्तुरपि व्यापार एव निरूपितत्वसम्बन्धेनाऽन्वयः। व्यापारमुख्यविशेष्यकश्च शाब्दबोधः। **'भावप्रधानमाख्यातं सत्वप्रधानानि नमानि'**[१२] इति निरुक्तोक्तेः। प्रतिपादितश्चैतत् कौण्डभट्टेनापि—

**फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः।**
**फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम्।।**[१३]

अर्थ च फलव्यापारयोर्धात्वर्थत्वे न कश्चन विवादः, किन्तु फलव्यापारयोः खण्डशः शक्तिविशिष्टेव विवादः प्राचीननवीनयोः।

**प्राचां मतम्**

प्राचीनाः कौण्डभट्टादयस्तु एकवृन्तगतफलद्वयन्यायेन धातोः फलनिरूपिता व्यापार निरूपिता च पृथगुपस्थितिप्रयोजिका खण्डश एकैव शक्तिः स्वीकुर्वन्ति। अत एव **'फलव्यापारयोर्धातुः'** इत्यत्र द्विवचनोक्तिः सङ्गच्छते। खण्डशः शक्तिस्वीकारादेव 'स्तोकं पचति इत्यादौ स्तोकपदार्थस्य धात्वर्थे फलान्वयो भवति, विशिष्टे शक्तिस्वीकारे तु फलस्य धात्वर्थैक देशत्वात् तत्रान्वयो न सम्भवति ''पदार्थः पदार्थेनान्विति न तु तदैक देशेन'' न्यायविरोधात्।

**नागेशाभिमतिः**

लः कर्मणि च भावे चाकर्मकेभ्यः इत्यादिसूत्रविरोधापत्तेः फलमात्रं न धात्वर्थ इति। न हि तेन व्यापारस्य प्रत्ययार्थता लभ्यते। पचति पक्ष्यति पक्ववानित्यादौ फूत्कारादिप्रतीयते। तत्रानेकप्रत्ययानां शक्तिकल्पनापेक्ष्यैकस्य धातोरेव शक्तिकल्पनोचिता। फले व्यापारे च पृथग् शक्तिस्वीकारे उद्देश्यविधेयभावेनान्वयप्रयोजिकायाः पृथगुपस्थितेर्दर्शनेन व्यापारोद्देश्यफलविधेयकस्य फलोद्देश्यकव्यापारविधेयकस्य च बोधापत्तिः स्यात्। एकपदे व्युत्पत्तिद्वयकल्पनम्, धातोश्र्चार्थद्वये शक्तिद्वयकल्पनम्, कार्यकारणभावद्वयकल्पनञ्चेत्यादि महद्गौरवम्। अतः फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले धातूनां शक्तिरेकैव। व्यापारविशेष्यकबोधे कर्तृप्रत्ययसमभिव्याहारे फलविशेष्यकबोधे कर्मप्रत्ययसमभिव्याहारे चोपस्थितिद्वये द्विविधहेतुत्वस्य प्रामाणिकगौरवस्वीकारेणादोष इति स्वीकुर्वन्ति।

**फलस्य धात्वर्थत्वम्**

धात्वर्थविषयकं विचारमुपस्थापयद्भिः कौण्डभट्टादिभिर्वैयाकरणैर्धातोः फलवाचकत्वे इमा युक्तय उपस्थाप्यन्ते—

१. सकर्मकत्वोच्छेदापत्तिः।

२. 'क्रियते घटः स्वयमेव' इति प्रयोगः न स्यात्।

३. त्यजिगम्योः पर्यायतापत्तिः।

४. 'द्वयर्थः पचिः' इति भाष्यनिर्देशश्च।

**फलस्य धात्वर्थत्वसाधनम्**

वस्तुतस्तु व्याकरणनिकाये फलस्य धात्वर्थत्वं सर्वैरेव स्वीकृतम्, अतः फलस्य धातुवाच्यत्वमवश्यमेवाङ्गीकार्यम्। यद्यपि फलस्य धात्वर्थत्वं फलशब्देन न निर्दिष्टं कैश्चिदपि, तथापि पाणिन्याद्याचार्याणां काश्चिदुक्तयोऽत्र प्रदर्श्यन्ते, येन फलस्यापि धात्वर्थत्वं सिद्ध्यति। सूत्रं निर्मितं पाणिनिना **'कर्मवत् कर्मणा तुल्यक्रिया'** इति। तस्यायमर्थः:- कर्मस्थया क्रियया तुल्यक्रियः कर्ता कर्मवद् भवति। अत्र सूत्रे कर्मणेत्यत्र कर्मपदेन कर्मस्था क्रियैव गृह्यते। तथा चोक्तं कैयटेन कर्मणेति-कर्मस्थया क्रिययेत्यर्थः। **''साध्यसाधनयोरत्यन्तभेदात् तुल्यत्वासम्भवात् कर्मस्था क्रिया कर्मशब्देनोच्यते।''**[१४] सा च कर्मस्था क्रिया फलरूपैव, न तु व्यापाररूपा। अत एव कर्मणेत्यस्य प्रयोजनप्रतिपादनाय कर्मणेति किमर्थम्? भाष्यस्थप्रश्नस्याशयं प्रकटयता कैयटेनोक्तम्- **''धातुवाच्या क्रिया कर्तृकर्मणोः समवेता, तत्र कर्तृस्थया क्रियया तुल्यक्रियः कर्ता न सम्भवति कर्मस्यैवक्रियाश्रृष्यते''**[१५] इति। सा च कर्मस्था क्रिया धातुवाच्या किमित्याकांक्षाया फलमेव स्वीकार्यम्, न तु व्यापारः, कर्मनिष्ठव्यापारस्य धातुवाच्यत्वाभावात्।

एवञ्च दृश्यते यत् फलशब्देन फलस्य धात्वर्थत्वं न कैश्चिदपि वैयाकरणैः प्रतिपादितम्, किन्तु प्रकारान्तरेण शब्दान्तरेण च सर्वैरेव भाष्यकारकैयटपाणिन्यादिवैयाकरणैः फलस्य धात्वर्थत्वं स्वीकृतमेव तत्तत्स्थलेषु।

फलस्य धात्वर्थत्वाभावे कर्मसंज्ञैवानुपपन्ना, कर्मसंज्ञाविधायकसूत्रस्यार्थे स्ववाचकधातुवाच्यत्वसम्बन्धेन व्यापारस्य फले वैशिष्ट्यावश्यकत्वात्। अत एवोक्तं नागेशेनापि **'कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वमिति निष्कृष्टमतेऽपि फलाश्रयतया कर्मसंज्ञकस्य धात्वर्थफले वान्वयौचित्येन द्योतकत्वमावश्यकम्।'**[१६]

अत्र तु धात्वर्थफल इति स्पष्टं वदता नागेशेन फलस्य धात्वर्थत्वं स्वीकृतमेव। तस्माद् नागेशाभिमतसकर्मकत्वस्वीकारे फलस्य धात्वर्थत्वाभावेऽपि नास्ति काचिद् विप्रतिपत्तिरिति न वक्तुं शक्यते कैश्चिदपि, कर्मसंज्ञाऽनुपपत्तेः प्रतिपादितत्वात्। तस्मात् फलस्य धात्वर्थत्वमवश्यमेव स्वीकार्यम्।

एवञ्च सर्वैरेव वैयाकरणैर्धात्वर्थत्वेन स्वीकृतस्य फलस्य धात्वर्थत्वखण्डनमविचारितरमणीयमेव। तस्मात् फलव्यापारौ धातुवाच्याविति वैयाकरणसिद्धान्त इति शम्।

◆

## सन्दर्भाः


१. अष्टाध्यायी १/३/२.
२. अष्टाध्यायी १/२/४५.
३. ऋग्वेद सं. - १/१९०/८.
४. भाट्टतन्त्ररहस्यम् - पृ. ५८.
५. प.ल.म. धात्वर्थविचार पृ. ४२.
६. वै.भू. सार, धात्वर्थनिर्णयः.
७. भाट्टतन्त्ररहस्यम् - पृ. ५८.
८. पाणिनि. अ. ३/४/६९.
९. व्युत्पत्तिवाद पृ. १८४.
१०. व्युत्पत्तिवाद पृ. १८६.
११. प.ल.म. धा. विचार -
१२. निरुक्त- १/९.
१३. वै.भू.सा- २.
१४. महाभाष्य प्र.टी. ३/१/८७.
१५. म.भा.प्र.टी.
१६. पा.ल.म. नियतार्थविचार पृ. ५७.


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 74-77

# संस्कृत-काव्यशास्त्रे वक्रोक्ति-विमर्शः

डॉ. तरुण कुमार शर्मा*

आचार्यकुन्तकः वक्रोक्तिसिद्धान्तस्य प्रवर्तकोऽस्ति। तेषां मतानुसारेण वक्रोक्तिरेव काव्यस्यात्मा विद्यते। वक्रोक्तिसिद्धान्तस्य उद्भव आचार्यभामहेन प्रारभते। स एव प्रथमः वक्रोक्तिवादी आचार्यः मन्यते। आचार्यभामहेन प्रोक्तं यत् काव्यस्य सौन्दर्याधायकतत्त्वं अलंकारो विद्यते तथा च कस्यापि अलंकारस्य अस्तित्वं वक्रोक्तिं विना न भवितुं शक्यते। सः चालंकारे समग्रमपि काव्यवैशिष्ट्यम् संग्रहणाति। सर्वत्रापि अतिशयोक्तेः प्राधान्यं निरीक्ष्यते। ध्वनिवादेऽपि अतिशयोक्तिमूलक एव ध्वनिः।

शब्दार्थयोः वक्रतया वाध्यां चमत्कार आगच्छति, चमत्कारपूर्णा वाणी एव काव्यं आस्ति तथा च एतयोः निषादकतत्त्वं वर्तते। शब्दार्थयोः वक्रता, इत्थं वक्रतासमन्वितौ शब्दार्थौ 'काव्यम्' इत्यभिधीयते भामहस्य मते अतिशयोक्ति एव समग्रतया वक्रोक्तिः अस्ति। एतया अर्थे रमणीयता आगच्छति एतदर्थं कविभिः प्रयासः कर्त्तव्यः, एतां विना कोऽलंकारः सम्भवः? भामहेनोच्यते—

**सैषा सर्वत्र वक्रोक्तिरनयाऽर्थो विभाव्यते।**
**यत्नोऽस्यां कविना कार्यः कोऽलंकारोऽनया विना।।**[१]

भामहोऽतिशयोक्तिं वक्रोक्तिंच पर्यायत्वेन विगणयति। अत्र सैषा अतिशयोकितरेव वक्रोक्तिरित्यर्थः अनयैव अर्थस्य अभिव्यक्तिः भवति अतिशयोक्तिमूलैव वक्रोक्तिः। भामहाभिमतेन वक्रोक्तिः सर्वालंकाररुपा। सर्वेषामलाराणां मूलमेतत। अनयैव अर्थाभिव्यक्तिः। वक्रोक्तिः काव्ये समस्तसौन्दर्याधायिका। एवं भामहमतेन वक्रोक्तिः काव्यस्यात्मा।

भामहः काव्यस्यलक्षणं निरूपयन्नाह—**शब्दार्थौ सहितौ काव्यम्।**[२]

अत्र शब्दार्थौ शब्दार्थयोरेव वाचकौ न अपितु चारुत्वहेतूनां अपि प्रत्ययकौ स्तः शब्दार्थयोः सम्बन्धस्य सर्वदा विद्यमानत्वात् तयोः साहित्यस्य कदापि अभावो न भवति। अतः साहित्यस्य भावः अत्र विशिष्टं साहित्यं एवअभिप्रेतमस्ति। इयं च विशिष्टा वक्रौक्तौ भामहेनोक्तम्—

वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृतिः।[३]

आचार्यकुन्तकोऽपि वक्रोक्तिस्वरूपं वक्रोक्तिजीविते प्रतिपादयन्नाह—

**उभावेतावलंकार्यौ तयोः पुनरलंकृतिः। वक्रोक्तिरेव वैदग्ध्यभङ्गीभणितिरुच्यते।।**[४]

वक्रोक्तिर्वचोभङ्गिमा एवास्ति। एवं वचोभङ्गिमा एव उक्तौ शोभां आदधाति। उक्तौ चमत्कृतेश्चारुतायाश्च सम्पादनं वक्रोक्तिरेव संभाव्यते। अतः वक्रोक्तिः काव्यजीवितम्। वक्रोक्तिहीनं काव्यं निर्जीवमेवास्ति। उक्तवैचित्र्यं

* सह अध्यापकः संस्कृत-विभागे, अतर्रापरास्नातक महाविद्यालये अतर्रा बाँदा उत्तर प्रदेशे।

चमत्कृतिर्वा वक्रोक्तिरस्ति। सैषा विशेषता काव्यं प्रतिभामूलैव। यत्र कस्मिंश्चित् वर्णनविषये तस्य कस्यचिद् धर्मस्य गुणस्य वाऽतिशयेनोक्त: वैचित्र्येण विच्छित्या वा प्रतिपाद्यते तत्र वक्रोक्ति: अस्ति। काव्यलक्षणेऽपि वक्रोक्तेरनिर्वायत्वं कुन्तकेन वक्रोक्तिजीविते प्रतिपादितम्–

**शब्दार्थौ सहितौ वक्रकवि व्यापारशालिनी।**

**बन्धे व्यवस्थितौ काव्यं तद् विदाह्लादकारिणी।।**[५]

वक्रोक्ते: स्थापनायां विषये आचार्यानन्दवर्धनस्यापि महत्त्वपूर्णं योगदानमास्ति। आचार्यानन्दवर्धन: सर्वथा सहमतोऽस्ति। तन्मतानुसारम्–**काव्यस्यात्मा ध्वनि:।**[६]

कुन्तको भामहेन दण्डिना च प्रेरणां अवाप्य स्वभावोक्तावपि वक्रोक्तेर्दर्शनं कुरुते। वक्रोक्ते: क्षेत्रं च यावदवव्यर्थविषयं विस्तारयति। कुन्तकानुसारं काव्यशोभाकारा: सर्वेऽपि धर्मावक्रोक्तिजन्या एवस्ति। एवं स्फुटं ज्ञायते यत् कुन्तको वक्रोक्तेर्महत्त्वं प्रभावं चमत्कृतिश्च अलकारवादिभ्य: एवागृहणात्। आनन्दवर्धनोऽपि वक्रोक्तिं समर्थयन् इव प्रतिभाति तन्मतानुसारं 'काव्यात्मा ध्वनि:।' काव्यस्य कलाभावपक्षयोर्ध्वनिना वक्रता प्रतिपाद्यते। अतिशयोक्ति: काव्यस्य सौन्दर्यं विशदयति।

सर्वेप्यलंकारा: अतिशयोक्तौ वक्रौक्तौ वा समाश्रिता:। कविप्रतिभाजन्या अतिशयोक्ति: अलंकारेष्वधिकं सौन्दर्य वर्धयति। अतिशयोक्त्या वक्रोक्त्या वा हीना अलंकारा अलंकारमात्रमेव। आनन्दवर्धनस्योक्ति: भामह–दण्डिनोर्वक्रोक्त्या अभिन्ना अस्ति अतएव ध्वन्यालोके तेनोच्यते–'अतिशयोक्तिगर्भता सर्वालंकारेषु शक्यक्रिया। वक्रोक्तैव च सा महाकविभि: कामपि काव्यच्छविं पुष्यति। तत्रातिशयोक्तिर्य अलंकारं अधितिष्ठति कविप्रतिभावशात् तस्य चारुत्वातिशयोगोऽन्यस्य तु अलंकारमात्रैवेति। सैव सर्वालंकाररूपा।''

अतिशयोक्तिहीनां वक्रोक्तिहीनं वा काव्यं अवरकाव्यत्वेन गण्यते। एतस्मात् कारणात् अतिशयोक्ति: सर्वालंऽकारमूला मन्यते। आनन्दवर्धनाचार्यमतेन अतिशयोक्ते: अलंकारान्तरै: साङ्कर्य वाच्यत्वेन व्यङ्गयत्वेन च भवति। वाच्यरूपेण सा सर्वेषां अलंकाराणां जननी अस्ति। व्यरूपेण च संयुक्ता सा ध्वनिरूपेण गुणीभूतव्यङ्ग्यरूपेण च विपरिणमते। काव्यस्य कला भाव पक्षयोर्ध्वनिनावक्रता सम्पाद्यते। अतिशयोक्ति: काव्यस्य मनोहरत्वं वर्धयति। सर्वे अलंकारा: अतिशयोक्तौ आश्रिता:। आचार्यानन्दवर्धनेन ध्वन्यालोके यथोक्तम्–

तस्याश्चालंकारान्तरसंकीर्णत्वं कदाचित् वाच्यत्वेन कदाचित् व्यंग्यत्वेन। अतिशयोक्तिस्तु सर्वालंकारविषयोऽपि संभवति।[७] इति वदता आनन्दवर्धनेन वक्रोक्तेरपि सर्वालंकारविषयत्वं उपपाद्यते।

कुन्तकस्यमते चातुर्यपूर्णभंगिमया कृतं कथनमस्ति 'वक्रोक्ति:'। कुन्तकाचार्य: स्वविरचिते वक्रोक्तिजीविते ग्रन्थे कविव्यापाररूपकाव्यस्य वक्रताया: व्याख्यानं कुर्वन् सर्वप्रथम वक्रताया: षड्भेदान् निरूपितवान्। प्रसिद्धाभिधानव्यतिरेकिणी विचित्रैवाभिधा। कीदृशोवैदग्ध्यभङ्गीभणिति?वैदग्ध्यं विदग्धभावं कविकर्मकौशलं तस्य भङ्गी विच्छिति तया भणिति: वैचित्रैराभिधा वक्रोक्तिरित्युच्यते इति कुन्तकाचार्येण कथितम्। आचार्य कुन्तक: वक्रोक्ते: भेदप्रभेदानां विस्तृतं वैज्ञानिक च वर्णनं कृतवान्। कुन्तकेन प्रतिपादितं यत् काव्यानां सर्वेषां तत्वानां सन्निवेश:वक्रोक्तेरन्तर्गतं जायते। वक्रोक्ते: षड्विधविभाजनं कुन्तकेन कृतं, ते सन्तिवर्णविन्यासवक्रता, पदपूर्वार्द्धवक्रता, प्रत्ययाश्रितवक्रता, वाक्यवक्रता, प्रकरणवक्रता, प्रबन्धवक्रताश्च।

**प्रथमा वर्णविन्यासवक्रता**–अस्मिन्नन्तर्गते व्याचवर्णानां सौन्दर्यस्य प्रकाराणां विवेचनमस्ति। अनुप्रासयमकालंकाराणां वृत्तियाणां रीतिनाञ्च अन्तर्भाव: वर्णविन्यासवक्रतामेव भवति। वर्णविन्यासवक्रता

विषये उक्तं–

**वर्णविन्यासवक्रत्वं पदपूर्वार्द्धवक्रता। वक्रतायाः परोऽप्यस्ति प्रकारः प्रत्ययाश्रयः।।**[८]

वर्णानां विन्यासो वर्णविन्यासः अक्षराणां विशिष्टन्यसनं तस्य वक्रत्वं वक्रभावःप्रसिद्धप्रस्थानव्यतिरेकिणा वैचित्र्येणोपनिवद्धः संनिवेशविशेषविहितास्तद्विदाह्लादकारी शब्दशोभातिशयः। यथा–

**प्रथममरुणच्छायस्तावत्ततः कनकप्रभस्तुदनु विरहोत्ताभ्यत्तन्वी कपोलतलद्युतिः।**

**प्रसरति तत्तो ध्वान्तक्षोदभमः क्षणदामुखे सरसबिसिनिकन्दच्छेदच्छविर्मृगलांछनः।।**[९]

**द्वितीया पदपूर्वार्द्धवक्रता**–शब्दस्य रचना प्रातिपदिकेन प्रत्ययस्य संयोगो भवति। अस्या नवसंख्यकाः भेदा सन्ति। यथा–रुढिवैचित्र्यक्रता, पर्यायवक्रता, उपचारवक्रता, विशेषणवक्रता, संवृत्तिवक्रता, वृत्तिवक्रता,भाववैचित्र्यवक्रता, लिङ्गवैचित्र्यवक्रता क्रियावैचित्र्यवक्रता चेति। पदपूर्वार्द्धवक्रतायाश्चान्तर्गते आचार्यकुन्तकः ध्वनिवादिनां अर्थान्तरसंक्रमितवाच्यध्वनेः उपचारवक्रतायाश्चान्तर्गते अत्यन्ततिरस्कृतवाच्यध्वनेः समावेशः कृतवान्। पदस्य सुबन्तस्य तिङ्न्तस्य वा यत्पुर्वार्द्धप्रातिपदिकलक्षणं धातुलक्षणं वा तस्य वक्रता वक्रभावो विन्यास वैचित्र्यम्। यथा—

**तृतीया प्रत्ययाश्रितवक्रता**–पदस्य उत्तरार्द्ध स्थितः सुतिङ्दि प्रत्ययानां विन्याससौदर्यस्य अस्यां अन्तर्भावो जायते। अस्याः षड्भेदाः सन्ति–कालवैचित्र्यवक्रता, कारकवक्रता, वचनवक्रता, पुरुषवक्रता, उपसर्गवक्रता प्रत्ययवक्रताचेति। प्रत्ययः सुप् तिङ् च यस्याश्रयस्तस्य सांख्याकारकपुरुषपुरुषादिवैचित्र्यविहितः यस्मिन् वचनवैचित्र्यं काव्यबन्धशोभायैर्निवध्यते सा प्रत्ययाश्रितवक्रता।[११] यथा—**मैथिली तस्य दारा।**[१२]

**चतुर्थ-वाक्यवक्रता–**

वाक्यविन्यासस्य सौन्दर्यस्य नामवाक्यवक्रतास्ति। अस्यां वक्रतायां अलंकारणां आगच्छति। 'वाक्यस्य वक्रभावोऽन्यो विद्यते यः सहस्त्रधा। यत्रालंकारवर्णोऽसौ सर्वोऽसौ सर्वोऽप्यन्तर्भविष्यति।'[१३]

**पंचमप्रकरणवक्रता**–प्रबन्धरस्यैकदेशं प्रकरणमुच्यते। वक्रभावः विन्यासवैचित्र्यं प्रबन्धैकदेशभूते प्रकरणे यादृशोऽस्ति, प्रबन्धे वा नाटकादौ सोऽत्युच्यते। सः सहजाहार्यसौकुमार्यमनोहरः। प्रतिपादितं यथा–

**वक्रभावः प्रकरणे प्रबन्धे वास्ति यादृशः। उच्यते सहजाहार्य सौकुमार्यमनोहरः।।**[१४]

**षष्ठ प्रबन्धवक्रता**–सम्पूर्णप्रबन्धदृष्ट्या विन्याससौन्दर्य इति नाम्ना अभिधीयते प्रबन्धवक्रतायाः षोढा भेदाः सन्ति। यथा–मूलरसपरिवर्तनवक्रता, समापनवक्रता, कथाविच्छेदवक्रता आनुपंकवक्रता, नामकरणवक्रता तुल्यवक्रता चेति। प्रबन्धेर्वक्रभावः प्रबन्धवक्रतेति। पूर्वोक्तविभाजनेन ज्ञायते यत् वक्रोक्तेः विस्तारो वर्णादारभ्य प्रबन्धं यावत् वर्तते। एतदन्तर्गतमेव भाषा, प्रकृतिवर्णनं, चरित्र-चित्रणं, कथासंयोजनं, ऐतिहासिक-तथ्यसंकलनं,वस्तुवर्णनं, अलंकारविधानं, रसप्रयोगः, काव्यसंदेशादिकच तथा सूत्ररूपेणोपलभ्यते येन परिवर्तिन्याः साहित्यिकपरीक्षायाः सरणिः प्रशस्ता भवति। प्रतिपादितम् यथा—

**तदा जायन्ते गुणा यदा ते सहृदयैर्गृह्यन्ते।**

**रविकिरणानुगृहीतानि भवन्ति कमलानि कमलानि।।**[१५]

वक्रोक्तेः विभिन्नेषु भेदेषु ध्वनेः भेदानां समावेशः जायते ध्वनेः अपेक्षा वक्रोक्त्याः क्षेत्रं व्यापकं वर्तते। क्रियावैचित्र्यवक्रतायां कुन्तको ध्वन्यालोकस्यमंगलाचरणं उपस्थापयति। यथा—

**स्वेच्छाकेसरिणः स्वच्छस्वच्छायायासितेन्दवः।**

**त्रायन्तां वो मधुरिपोः प्रपन्नार्तिच्छदो नखाः।**[१६]

संक्षिप्तरुपेण कथ्यते यत् कुन्तकाचार्यमते वक्रोक्तिः काव्यस्यात्मा। वैदग्धभङ्गीभणितिरुपवक्रोक्तिः रस-ध्वनि-औचित्य-तत्त्वत्रयं-आत्मसां करोति। वक्रोक्तिं विना काव्ये काव्यत्त्वं न तिष्ठति। वक्रोक्तिसिद्धान्तस्य महत्त्वस्य कारणं वर्त्तते यत् सर्वेषामपि काव्यमूलत्त्वानां रसालंकारध्वनिरीत्यादीनां समावेशो भवति। कुन्तकाचार्यः अलौकिकचमत्कारजनकाह्लाददायिन्याः विचित्रतायाः सिद्धये 'वक्रोक्तिजीवितम्' इत्यस्य ग्रन्थस्य रचनां कृतवान्। एषः वक्रोक्तिसिद्धान्तं पल्लवितं पुष्पितञ्च करोति। उपर्युक्त विवेचनेन स्पष्टं भवति यत् **'काव्यं हि वक्राक्तिप्रधानम्।'**

◆

**सन्दर्भाः**


१. काव्यालंकारम् ६३

२. काव्यालंकारम् १/१६

३. काव्यालंकारम् १९

४. वक्रोक्तिजीवितम् ५१

५. वक्रोक्तिजीवितम् १५

६. ध्वन्यालोकः ८

७. ध्वन्यालोकः ३/३७

८. वक्रोक्तिजीवितम् १/६३

९. वक्रोक्तिजीवितम् १/४१

१०. वक्रोक्तिजीवितम् १/४२

११. वक्रोक्तिजीवितम् १/८६

१२. वक्रोक्तिजीवितम् १/६३

१३. वक्रोक्तिजीवितम् १/९१

१४. वक्रोक्तिजीवितम् १/२१

१५. वक्रोक्तिजीवितम् १/१९५

१६. ध्वन्यालोकः १


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 78-87

# संस्कृतवाङ्मये प्राणिविज्ञानम्

डॉ. महेन्द्र पाण्डेयः*

साम्प्रतिके युगे विज्ञानस्य महन्महत्त्वं प्रतीयते। विशिष्टं ज्ञानं विज्ञानं भवति। संस्कृतवाङ्मये प्राणिविज्ञानस्य भूमण्डले महत्त्वपूर्णस्थानमस्ति। इह संसारेयावन्तः स्थावरजङ्मात्मकाः प्राणिनः सन्ति तेषां परस्परमुपकार्योपकारकभावसम्बन्धो जायते। ब्रह्मा प्रथमतः देवान् संसृज्यतेभ्योद्युलोकस्थानं प्रदत्तवान्। तत्र देवाः सौख्यसाम्राज्यम् अनुभवन्ति। मनुष्यानपि संसृज्य तेभ्यो भूमण्डलं ब्रह्मणा प्रदत्तम्। भूमण्डले सर्वे प्राणिनः सौख्यभावेनोपजीवन्ति। अतः सर्वेऽपि प्राणिनः अन्योऽन्यं सततं कामयन्ते। अर्थात् द्युलोकः पृथिवीलोकाधीनः, पृथिवीलोकः द्युलोकान्तरिक्षलोकाधीनश्च।

**यथा गीतायाम्''सह यज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।**
**अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्।।**
**देवान् भावयतानेन ते देवा भावयन्तु वः।।**
**परस्परं भावयन्तः श्रेयः परमवाप्स्यथ।।**[१]

विदन्येव सर्वे विद्वान्सः यत् संस्कृतवाङ्मयं प्राणिविज्ञानस्य मुख्यमवलम्बनमिति। इदं शास्त्रज्ञानां जगतो विभिननेषु धर्मेषु विज्ञानक्षेत्रेषु च विपुलमस्ति। विश्वाद्यग्रन्थेषु प्राचीनतमं स्वीक्रियते। सर्वेऽपि मतावलम्बिनः स्वमतं संस्कृतोक्तैः प्रमाणैः परिपुष्टं कुर्वन्ति, स्वां कृतिं च धन्यां कल्पयन्तिं नहि केवलं भारतीया एव श्रद्धालवः अऽपि तु पाश्चात्यापि विद्वान्सः वैज्ञानिकाः श्रद्धानता दृश्यन्ते। यतोहि संस्कृतवाङ्मयेऽस्मिन् मूलविज्ञानमस्ति। अपि च संस्कृतवाङमये एव पुरुष-वृक्ष-वृक्ष-नौका-गोश्येनादिरूपकाण्यवलम्ब्य ब्रह्मात्मप्रकृतिपुरूषादिपारमार्थिकपदार्थानां सृष्टिस्थपृथिव्यन्तरिक्षद्युस्थानामैहिकविषयाणां व्यवहाराणाञ्च प्रबोधनस्य पर्याप्तान्युदाहरणानि लभन्ते।

वेदेषु 'पुरुषसूक्तं' विज्ञानविषये प्रसद्धिमुदाहरणमस्ति। अत्र साङ्गवेदपुरूष-यज्ञपुरुष-कालपुरुषइव वैज्ञानिकपुरुषोऽपि वर्तते। यथा–

**सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।**
**स भूमिं सर्वतः स्मृतवात्यतिष्ठद्दशाङ्गुलम्।।**[२]

मन्त्रेऽस्मिन् परमात्मविज्ञानानन्दादिगुणपुरुस्याध्यात्मिककल्पनाया भव्य-निदर्शनमस्ति। स पुरुषः सर्वेषां शासको वर्तते। निखिले विश्वे एव सत्ता वर्तते। पुरुषस्यास्य सहस्रं शिरांसि-सहस्रं-अक्षीणि-सहस्रं पादाश्च सन्ति। अत्र सहस्रमिति बहुत्ववाचीं अर्थात् यानि सर्वप्राणिनां शिरांसि तानि सर्वाणि। अक्षिग्रहणमत्र

---

* वेदविभाग, समपूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी।

सर्वज्ञानेन्द्रियोपलक्षणम् पादग्रहणमत्र कर्मेन्द्रियोपलक्षणम्। इदं वर्तमानमतीतं भविष्यं जगत् तत्सर्वमेव पुरुष एव। पुरुष एव अन्नेन प्राणिना भोग्यान्नेन फलेन निमित्तभूतने स्वीयां कारणावस्थामतिक्रम्य परिदृश्यमानां जगदवस्थां प्राप्नोति। सर्ववेदान्तवेद्य: परमात्मा स्वमायया विराड्देहं ब्रह्माण्डरूपं सृष्ट्वा तत्र जीवरूपेण प्रविष्य ब्रह्मण्डाभिमानी देवतात्मा जीवोऽभवत्। स एव भूमिसृष्टेरनन्तरं तेषां जीवानां शरीराणि उत्पादितवान्। पुरुष एवं यज्ञात् दधिमिश्रमाज्यं सम्पादितवान्। तथा च गवाश्वादीन् पशून् उत्पादितवान्। एवं ब्राह्मणादीन् मनुष्यान् चन्द्रादिदेवान्-अन्तरिक्षादि-लोकान् वसन्तादीन् ऋतून् इति। तथा च स जीवनव्यापारे ज्ञानार्थधर्माधर्मव्यवहारग्राह्यक्षणं-कर्तव्याकर्तव्यकर्म च निर्मितवान्। कथितमपि-''तस्माद्यज्ञात्सर्वहुत ऋच:'' (शु.यु. वेद-३१-७) यतोहि ऋग्यजुष सामभिश्छन्दोभिश्च विना यज्ञा न सिद्धयन्ति तथा ये सृष्टिसाधनयोग्या: तान्यपि उत्पादितवान्। ''यज्ञो वै कर्म'' (शत०वा० १.१.१.१) तथा च यज्ञो वै सर्वकामधुक् अत: भूलोके यज्ञस्य महन्महत्वं वर्तते। यज्ञोऽयम् अग्रत: सृष्टे: पूर्वं विराट्पुरुषत्वेनोत्पन्नम्। यथा–अग्निहोत्रम्, दर्शपूर्णमासो, चातुर्मास्यानि, पशु: सोम इति श्रौतादियज्ञा: पञ्च इति। स्मृतौ तु सप्तपाकयज्ञसंस्था: तथा च सप्तहविर्यज्ञसंस्था:, अग्निष्टोम अत्यग्निष्टोम उक्थ्य: षोडशी, बाजपेय: अतिरात्र: आप्तोर्याम इति सपत सोमसंस्था: एवं श्रौतानि स्मार्तानि मिलित्वा एकविंशति: यज्ञा:। तथा च देवयज्ञ:, भूतयज्ञ:, पितृयज्ञ:, मनुष्ययज्ञ: ब्रह्मयज्ञ: नित्यं भवति। अस्यैव नामान्तरं वैश्वदेवमिति। वैश्वदेवमिति कर्मणो नामधेयम्।

यज्ञादिमहत्वविषये कथितमपि गीतायाम्–

**यज्ञो दानं तप: कर्म न त्याज्यं कार्यमेव तत्।**
**यज्ञो दानं तपश्चैव पावनानि मनीषिणाम्।।**[३]

अपि च–

**अन्नाद् भवन्ति भूतानि पर्जन्यादन्नसमभव:।**
**यज्ञाद्भवति पर्जन्यो यज्ञ:कर्म समुद्भव:।।**[४]

यज्ञपुरुषविषये भागवतेऽपि–

**यस्य राष्ट्रे पुरिपूज्येत भगवान् यज्ञपूरुष:।**
**इज्यन्ते स्वेन धर्मेण जैनवर्णाश्रमान्वितै:।।**
**तस्य यज्ञो महाभाग भगवान् भूतभावन:।**
**परितुष्यन्ति विश्वात्मा तिष्ठतो निजशासने।।**[५]

एतवता यज्ञ: प्राणिकर्मषु श्रेष्ठतम: भवति येन कर्मणा सम्पूर्णं विश्वं सौख्यं कल्याणमारोप्यमाप्नोति। तथा चैव विश्वशान्तये यज्ञकर्माणि सदा एव कर्तव्यानि। यज्ञपुरुषो नाम ईश्वर: जीवश्च। आदिदैविक: प्रजापति:, आधिभौतिक: इति। जीवोऽपि चैतन्य एव। स अनेकेषु स्थानेषु विभिन्ननामरूपेषु दृश्यतें प्रजापते: उत्कृष्टरूपं जीव इति। यथा–

**मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्।**
**स मायी सृजतीत्याहु: श्वेताश्वतरशाखिन:।।**

रामानुजाचार्यमतानुसारेण यथा–

**वासुदेव: परं ब्रह्म कल्याणगुणसंयुत:।**

**भुवनानां उपादानं कर्ता जीवनियामकः।। इति।।**

अद्वैतवेदान्ते पञ्चीकरणेनैव सृष्टिः भवति–

तथा हि–

**द्विधा विधाय चैकैकं चतुर्धा प्रथमं पुनः।**

**स्वे स्वेतरद्वितीयांशैर्योजनात् पञ्च पञ्च ते।।**[६]

अर्थात् एकस्मिन् आकाशत्त्वे। यथा–

शब्दतन्मात्रम्+सपर्शतन्मात्रम्+रूपतन्मात्रम्+रसतन्मात्रम्+गन्धतन्मात्रमिति। एवमेव अन्येष्वपि वेदितव्यम्। तथा च पञ्चज्ञानेन्द्रियाणि-श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणख्यानि इति।

पञ्चकर्मेन्द्रियाणि-वाक्पाणिपादपायूपस्थाख्यानीति। तथा चाकाशादिपञ्चतन्मात्रादेव प्राणादिपञ्चवायवोऽपि सञ्जताः।

तथा च पञ्चवयवः–

प्राणापानव्यानोदानसमानाः।।

१. प्राणो नाम प्राग्गमनवान्नासाग्रस्थानवर्ती।।

२. अपानो नामार्वाग्गमनवान् पाय्वादिस्थानवर्ती।।

३. व्यानो नाम विष्वग्गमनवानखिलशरीरवर्ती।।

४. उदानो नाम कण्ठस्थानीय ऊर्ध्वगमनवानुत्क्रमणवायुः।।

५. समानो नाम शरीरमध्यगतासितपीतान्नादिसमीकरणकरः।।

समीकरणन्तु परिपाककरणं रसरुधिरशुक्रपुरीषादिकरणमिति यावदिति।

**चतुर्विधं स्थूलशरीरमिति**–चतुर्विधशरीराणि तु जरायुजाण्डजोद्भिज्जस्वेदजाख्यानि'' (वेदान्तसारः)

नृगवाद्याः जरायुजाः। कृमिदंशाद्याः, पक्षिसर्पादयोऽण्डजाः, उद्भिदस्तरुगुल्माद्याः।।

सांख्यमतानुसारेण सूक्ष्मशरीरम् अष्टादशाववात्मकं भवति। तथा च वेदान्तमतानुसारेण तु सूक्ष्मशरीरं सप्तदशावयवात्मकं लिङ्गशरीरं भवति।।

यथा कारिका–

**पञ्चप्राणमनोबुद्धिदशेन्द्रियसमन्वितम्।**

**अपञ्चीकृतभूतोत्थं सूक्ष्माङ्गं भोगसाधनम्।।**

अपि च–

**बुद्धिकर्मेन्द्रियप्राणपञ्चकैर्मनसा धिया।**

**शरीरं सप्तदशभिः सूक्ष्मं तल्लिङ्गमुच्यते।।**

अत्रलिङ्गं नाम लिङ्ग्यते ज्ञाप्यते प्रत्यगात्मसद्भाव एभिरिति लिङ्गानि।

मनुस्मृत्यनुसारेण तु ऋषिभ्यः पितरः, पितृभ्यो देवा दानवास्तथा च देवेभ्यः सर्वं जगदासीदिति।

**ऋषिभ्यः पितरो जाता पितृभ्यो देवदानवाः।**

**देवेभ्यश्च जगत् सर्वं चरणस्थाण्वनुपूर्वशः।।**

श्रुत्यनुसारेण तपसः उत्पन्नत्वात् ऋतादेव समस्तब्रह्माण्डस्योतपात्तिः यस्मिन् सूर्यचन्द्रनदीसमुद्र-

कालादीनामुत्पत्तिरभूत्। यथा–

**ऋतं च सत्यं चाभीद्धात्तपसोऽध्यजायत।**
**ततो रात्र्यजायत ततः समुद्रो अर्णवः।**
**समुद्रादर्णवादधि सवत्सरो अजायत।।**
**अहोरात्राणि विदधद्विश्वस्य मिशतोवशी।**
**सूर्याचन्द्रमसो धाता यथापूर्वमकल्पयत्।।**
**दिवं च पृथिवीं चान्तरिक्षमथो स्वः।।**[७]

तथा च ऋग्वेदेऽपि सृष्टिविषये कथितम्–

**तस्मादश्वा अजायन्त ये के चोभयादतः।**
**गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः।।**[८]

मन्त्रेऽस्मिन् विराट्पुरुषात् अश्वा मनुष्या अजावय इत्यादयश्चोत्पन्नाः तस्माद्विराट्पुरुषादेव चतुर्णांवर्णांनां सद्भावोऽस्ति। यथा–

**ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।**
**उरू तदस्य यद् वैश्यः पद्भ्यां शूद्रो अजायत।।**[९]

मन्त्रेऽस्मिन् चतुर्णां वर्णानां चर्चा अस्ति। येन प्रतीतो भवति तु समाजेऽस्मिन् तस्मिन्नेव युगे चतुर्णां वर्णानां सामाजिकाध्यात्मिकधारणायाः परिचायकत्वे अतिमहत्वपूर्णमस्ति। यथा ब्राह्मणः क्षत्रियः, वैश्यः, शूद्रश्चेति। एवं शिक्षाविषये ये वेदशास्त्रेष्वध्ययनशीला आसन् ते महनीया अभवन्। यथा शतपथे–**विद्वान्सो हि देवाः** (शत० ३/७/३/१०) तथा मनुष्यदेवः ब्राह्मणः। यज्ञे राजा एव दक्षिणा दातुं शक्नोति। क्षत्रियः राष्ट्रं रक्षति। वैश्यः व्यापारेण तस्य वर्द्धको भवति। शूद्राः राष्ट्रं सेवन्ते। एतेषां चतुर्णां वर्णानां जीवनं चतुर्षु आश्रमेषु विभज्य तेषां व्यवस्थाविहिता वर्तते।

चत्वार आश्रमाः–ब्रह्मचर्य-गृहस्थ-वानप्रस्थासन्याससंज्ञकाः। मानवजीवनस्य मूलाधारो ब्रह्मचर्याश्रमणैव सुखमयो भवति। एतस्य विषये सूक्तिर्विराजते–''ब्रह्मचर्येण तपसा देवा मृत्युमुपाध्नत।

गृहस्थाश्रमे तु स्त्रीपुंसयोः समानाधिकारो भवति। गृही पुत्रपौत्रादिकेन लोकान् जयति। यथा–

**पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।।**
**अथ पुत्रस्य पौत्रेण ब्रघ्नस्याप्नोति विष्टपम्।।**[१०]

तथा च वानप्रस्थाश्रमे पञ्चदशादधिकवर्षान्तरं आध्यात्मिकविद्यां उपासते। संन्यासाश्रमे तु परिव्राजको भूत्वा केवलं ज्ञानमुपासते। यथा गीतायाम्–**'सन्यासः कर्मयोगश्च निःश्रेयसकरावुभौ'।।**[११]

विराट्पुरुषादेव ऋगादिवेदाः सञ्जाताः। अतः वेदादिशिक्षाविषये नियमः प्रतिपादितः–

''षडङ्गो वेदोऽध्येयो ज्ञेयश्च'' इति। एतावता वेदादिशिक्षा एव प्रत्येकं मानवं सच्चरित्रं निर्मातुं प्रभवति। ता एव व्यवहारिककरणस्य ज्ञानं भवति। यत् कार्यं शिक्षया संसारे सम्पाद्यते न तत् केनाऽपि अन्येन साधनेन, अतः शिक्षाया अभ्यसनं सर्वैः कर्तव्यम्। एादृशवैदिकवाङ्मये शिक्षाशास्त्रस्य निर्देशः कृतः। वेदेषु उदात्तानुदात्तस्वरितभेदेन त्रिविधः स्वरः। स्वरितं विना महद् दुष्टफलं जायते।

**यथा-मन्त्रो हीनः स्वरतो वर्णतो वः मिथ्याप्रयुक्तो न तमर्थमाह।**

**स वाग्वज्रो यजमानं हिनस्ति यथेन्द्रशत्रुः स्वरतोऽपराधात्।।**

अतः स्वरज्ञानं समीचीनमपेक्षते (पा० शिक्षा) महाभारते शान्तिपर्वणि आचार्यगालवकृतस्य शिक्षाग्रन्थस्योल्लेखो लभ्यते। शिक्षाशास्त्रे याज्ञवल्क्यादिशिक्षासंज्ञाकानां विंशतिग्रन्थानामुल्लेखो दृश्यते। वेदेषु प्रातिशाख्यग्रन्थाः शिक्षा-शास्त्रस्य प्रतिनिधयः एव सन्ति। अद्यतने युगे पाणिनीयशिक्षा, इत्यस्य महत्वं वर्तते। अतः शिक्षाशास्त्रं प्राणिविज्ञानेषु पुरातनतरम्। संस्कृतवाङ्मये ऋषयः संस्कृतभाषायां लोकोपकाराय स्मृतिपराणादिग्रन्थानां रचनां कृतवन्तः। दर्शनञ्चापि सर्ववेदोपासनारूपमेव। वेदप्रथितसिद्धान्त एव स्मृत्यादिषु प्रतिपादितोऽस्ति। तथा च वेदार्थाऽवबोधने पुराणादिग्रन्थाः प्रसिद्धाः सन्ति। कथितमपि–

**इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्।**
**बिभेत्यल्परुताद् वेदो मामयं प्रहरेदिति।**

तथा च शिक्षाशास्त्रे कर्मसिद्धान्तस्य रहस्यम् मन्त्रेऽस्मिन् प्रतिपादितम्।

**कुर्वन्नेवेह कर्माणि जिजीविषेत् शतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।।**

तथा च दर्शनीयोऽयं मन्त्रः–

**यदा सर्वे प्रमुच्यन्ते कामा यस्य हृदि स्थितः।**
**अथ मर्त्योऽमृतो भवत्यथ ब्रह्म समश्नुते।।**[१२]

शिक्षायां वेदाङ्गानामपि अतिमहत्त्वपूर्णम् स्थानमस्ति। यथा–

शिक्षा कल्पोऽथ व्याकरणं निरुक्तं छन्दो ज्योतिषम्।। इति।

कल्पाः–वेदविहितानां कर्मणां व्यवस्थापनं क्रमपूर्वकं कल्पशास्त्रे कल्पितम्। द्विविधानि कल्पसूत्राणि श्रौतसूत्राणि स्मार्तसूत्राणि च। श्रौतसूत्रेषु श्रुत्युक्तयागस्य विधानमस्ति। स्मार्तसूत्राण्यपि द्विधा-गृह्यसूत्राणि धर्मसूत्राणि चेति। गृह्यसूत्रेषु अनुष्ठानस्य आचारस्य च वर्णनं विद्यते। तथा षोडशसंस्काराणां विशिष्टं वर्णनमस्ति। धर्मसूत्रेषु च धार्मिकनियमाः प्रजानां राज्ञाञ्च कर्तव्यचर्याः चत्वारो वर्णाः आश्रमाः तेषां धर्माश्च वर्णिताः सन्ति। कल्पसूत्रेषु ऋग्वेदस्य आश्वलायनंशाङ्ख्यायनञ्चेति। शुक्लयजुर्वेदस्य कात्यायनश्रौतसूत्रम् पारस्करगृह्यसूत्रम्। कृष्णयजुर्वेदस्य कल्पसूत्रम् बौधायनसूत्रम् आपस्तम्बसूत्रञ्चेति।

सामवेदे-लाट्यायनश्रौतसूत्रम् , द्राहयायणश्रौत सूत्रम् जैमिनीगृह्यसूत्रम्, गोभिलगृह्यसूत्रम्, खादिरगृह्यसूत्रञ्चेति जैमिनीयशाखाया इति। अथर्ववेदस्य वेतान्श्रौतसूत्रम् कौशिकसूत्रञ्चेति।

एतवता प्राणिजीवनस्य धार्मिकेषु विधानेषु गृह्यकर्मणां विभिन्नसंस्काराणाञ्च कल्पसूत्रे सुष्ठुतया वर्णनं कृतमस्ति। वेदिनिर्माणप्रकारं शुल्वसूत्रे प्रतिपाद्यमस्ति। लोकव्यवहारे सूत्रस्यास्यवैज्ञानिकमहत्त्वमस्ति। शूल्व इति मानक्रिया। सूत्रमिदं भारतीयज्यामितिशास्त्रस्य प्रवर्तकमस्ति। संस्कृतवाङ्मये धर्मसूत्राणि विशिष्टं सम्मानमधितिष्ठन्ति। बहवो प्राचीनाः धर्माः येषां प्रचारो भारतीयजनेषु इदानीमप्यवलोक्यते। यथा गौतमधर्मसूत्रम् बौधायनधर्मसूत्रम् इति।

वेदेषु पशवः इति धनत्वेन प्रतिपादिताः सन्ति। यथा पञ्चविंशब्राह्मणे–

"एतद् वैश्यस्य समृद्धिः यत् पशवः" यथा च तस्माद् बहुपशवैश्व देवोहि जागतो वर्षा ह्यस्य वैश्यस्य।। इति अत्र पशुः कृषेरूपलक्षणमिति।

व्याकरणं मुखत्वेन स्मृतमस्ति। व्याक्रियन्ते शब्दा अनेनेति व्याकरणमिति। व्याकरणं विना किमपि सुष्ठु वक्तुं न शक्यते।

भाषाशुद्धये व्याकरणस्यापेक्षा महत्वपूर्णं वर्तते। व्याकरणविषये ऋग्वेदस्य प्रसिद्धमन्त्रः प्रतिपादितः–

**चत्वारि शृङ्गाः त्रयोऽस्य पादाः द्वे शीर्षे सप्त हस्तासोअस्य।**

**त्रिधा बद्धो वृषभो रोरवीति महादेवो मर्त्या आविवेश।।**[१३]

व्याकरणज्ञानं विना यथा प्रतिपादितम्–

**उतत्वः पश्यन् न ददर्श वाचम् उतत्वः शृण्वन् न शृणोत्येनाम्।**

**अतो त्वस्मै तन्वं विसस्रे जायेव पत्ये उशती सुवासाः।।**[१४]

अतः अर्थावधरणाय व्याकरणस्य ज्ञानमपेक्षितं जायते।

निरुक्ते वैदिकपदानां निर्वचनमस्ति। अर्थावबोधे निरपेक्षतया पदजातं यतोक्तं तन्निरुक्तम्।

ज्योतिषम्-कालपरिज्ञाने मुहूर्त्तशब्देन दिनस्य रात्रेर्वा पञ्चदश विभागा उच्यन्ते। यथा रत्नमालायाम्–

"दिनस्य यः पञ्चदशो विभागो रात्रेस्तथा तद्धि मुहूर्तानामिति। कालो मुहूर्तशब्देन विवक्ष्यते। तस्य चिन्ता शुभाशुभरूपो विचारः तस्यमणिरिव महूर्तचिन्तामणिः। ग्रन्थेऽस्मिन् जातकादिसंस्काराणां शुभाशुभतिथ्यादीनां ज्ञानं भवति।

यथा–'वसन्ते ब्राह्मणोऽग्नीनानधीत, ग्रीष्मे राजन्यः शरदि वैश्यः'[१५]–

अपि च वेदा हि याज्ञार्थमभिप्रवृत्ताः कालानुपूर्वां विहिताश्च यज्ञाः तस्मादिदं कालविधानशास्त्रं यो ज्योतिषं वेद स वेद यज्ञान्।।[१६]

मानवजीवने षोडशसंस्काराणामपि महत्वपूर्णस्थानमस्ति। गर्भाधानादिभिः संस्कारकर्मभिः कृते पापं शमं याति। ते संस्कारा यथा–

**गर्भाधानमतश्च पुंसवनकं सीमन्तजाताभिधे**

**नामाख्यं सह निरुक्रमेण च तथाऽन्नप्राशनं कर्म च।**

**चूडाख्यं व्रतबन्धकोऽप्यथा चतुर्वेदव्रतानां पुरः।**

**केशान्तः सविसर्गकः परिणयः स्यात् षोडशी कर्मणाम्।।**[१७]

स्त्रीपुंसयोः गर्भाधानविषये सुश्रुतेन आयु इत्यस्य विचारः कृतः। यथा–

**पञ्चविंशे ततो वर्षे पुमान् नारी तु षोडशे।**

**समत्वागतवीर्यौ तु जानीयात् कुशलोभिक।।**[१८]

सुश्रुतमतेन वयस्तु त्रिविधम्-बाल्यं मध्यं बुद्धमिति। तेऽपि त्रिविधा-क्षीरपा-क्षीरात्रदाः-अन्नादा इति। तेषु संवत्सराः क्षीरपा, द्विसंवत्सराः क्षीरान्नदाः परतोऽन्नादा इति। तस्य विकल्पो वृद्धियौवनसम्पूर्णता हानिरिति। तत्र आविंशतेर्वृद्धिः आत्रिंशतो यौवनं, आचत्वारिशतः सर्वधात्विन्द्रियबलवीर्यसम्पूर्णता। अतः ऊर्ध्वमीषत्परिहाणिर्यावत् सप्ततिरिति। सप्ततेरुर्ध्व क्षीयमाणधात्विन्द्रियबलवीर्योत्साहमहन्यहनि वलिपलितखालित्यजुष्टं काषस्वास-प्रभृतिभिरुपद्रवैरभिभूयमानं सर्वक्रियासु असमर्थं जीर्णागारमिव अभिवृष्टमवसीदतं वृद्धमाचक्षते।[१९]

पुत्रोत्पत्तिविषयं यथा मनुस्मृतौ कथितम्–

**युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु।**

**तस्माद् युग्मासु पुत्रार्थी संविशेदार्तवे स्त्रियम्।।**[20]

तथा च–

**पुमान्पुंसकोऽधिके शुक्रे स्त्री भवतयधिकेस्त्रियाः।**

**समेऽपुमान् पुंस्त्रियो वां क्षीणेऽल्पे च विपर्ययः।।**[21]

यथा अग्निवेशगृह्यसूत्रे–(२/७/१६) षोडश्यां लभते पुत्रं ब्रह्मकीर्तनतादशं तदूर्ध्वमुपयमं कालो नास्ति कामभोगैव केवलम्।

गर्भाधानविषये पारस्करगृह्यसूत्रेऽपि कथितमस्ति।

अथ गर्भाधानम् स्त्रियः पुष्पवत्याश्चतुरहादूर्ध्वं स्नात्वा वि राजा यास्तस्मिन्नेव दिवा आदित्यं गर्भमिति। अहनि गर्भाधाननिषेधः प्राण वा ऐते स्कन्दति ये दिवा इति प्रश्नोपनिषदित्या संयुज्यन्ते।

मनुष्याणां पवित्रभोजनविषये विशेषमाह–

आहारशुद्धौ सत्वशुद्धिः सत्वशुद्धौ

ध्रुवा स्मृतिः (छान्दोय उपनिषद)

गर्भाधानस्थितिविरूष्ये यथा मन्त्रः प्रकल्पयति–

**मुखं सदस्यशिर इत्सतेन जिह्वा पवित्रश्विनासन्सरस्वती।**

**चप्य न मायुर्भिषगस्यवालो वस्तिर्न शेपो हरसा तरस्वी।।**[22]

तथा च शतपथब्राह्मणेऽपि–

गर्भमा दधीतेति तस्यामर्थं निष्ठाय मुखेन मुखं सन्धायापान्याभि प्राण्यादिन्द्रियेण ते रेतसा हेत आदधामीति गर्भिण्येव भवति।[23]

तथैव पारस्करगृह्यसूत्रेपि–

प्राणस्ते प्राणान् सदधाम्यस्थिभिरस्तीति मासैर्मांसानि वया त्वयमिति।[24]

एतावता परस्परं समुचितभावेनैव गर्भाधानमपेक्षते।

नित्याचारस्यापि मानवजीवने महर्षियाज्ञवल्क्येन अभ्युदितम्। श्रुतिः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः।

**सम्यक्सङ्कल्पजः कामो धर्ममूलमिदं स्मृतम्।**

तथा पराशरः–

**सनध्या स्नानं जपो होमः स्वाध्यायो देवतार्चनम्।**

**वैश्वदेवाऽतिथेयं च षट्कर्माणि दिनेदिने।।**

मानवजीवने प्रातरुत्थाय किं कर्तव्यमिति वाचस्पतौ दक्षः कथयति–

**उषः काले तु सम्प्राप्ते शौचं कृत्वा यथार्थवत्।**

**ततः स्नानं प्रकुर्वीत दन्तधावनपूर्वकम्।।**

**सन्ध्यायां प्रभाते च मध्याह्ने च ततः पुनः।**

प्रातरुत्थानाभावे दोषः–

**ब्राह्मे मुहूर्त्ते या निद्रा सा पुण्यक्षयकारिणी।**

**तां करोति द्विजो मोहात्पादकृच्छ्रेण शुध्यति।।**[२५]

परस्करगृह्यसूत्रे विण्मूत्रोत्सर्गविधिः इत्यस्य विधानमस्ति तिष्ठन्मूत्रपुरीषे कुर्यात्।
तथा च अङ्गिराः—कुर्यान्मूत्रपुरीषे तु शुचौ देशे समाहितः।
नृसिंहपुराणे दन्तधावने उक्तकाष्ठानि—
"तिन्तिणिर्वेणुंपृष्ठं च आम्रनिम्बौ तथैव च।
सर्जे धैर्यं वटे दीप्तिः करञ्जे विजयो रणे" इति।।

**आदर्शाभ्युदये संस्कृतवाङ्मयेषु नाट्यस्य वर्णनमपि दृश्यते—यथा—**
**जग्राह पाठ्यम् ऋग्वेदात् सामभ्यो गीतमेव च।**
**यजुर्वेदादभिनयान् रसानाथर्वणादपि।।**[२६]
**गान्धर्वं त्रिविधं प्रोक्तं स्वरतालपदात्मकं**[२७]
तथा च—
**यस्या गायन्ति नृत्यन्ति भूम्यां मर्त्या व्यैलवाः।**
**युध्यन्ते यस्यामक्रन्दो यस्यां वदति दुन्दुभिः।।**[२८]

नृत्यविषये यथा—'नृत्ताय' सूत्रमिदं पदं कथकनृत्यस्योपजीव्यं वक्तुं शक्यते। एवमेव संगीतस्य विभिन्नसम्प्रदायेषु विविधानां गीतवाद्यनृत्यताललयादीनां ये सप्रकारप्रयोगाः शास्त्रेषु लोकेषु च दृश्यन्तेऽनुभूयन्ते।

तथा च वेदमन्त्रणां प्राणिजीवोपार्जनाय शान्ति-पौष्टिकादिकर्मसु विनियोगाः दृश्यन्ते—
द्यौः शान्तिरन्तरिक्षं शान्तिः पृथिवी शान्तिरापः शान्तिरोषधयः शान्ति.....इत्यादयः।[२९]

वेदेषु संग्रामे शत्रोः प्रबलसेनासंहरणाय नृपतेः जयाय चानेका अभिचारमन्त्राः सन्ति। व्याधिनाशाय विभिन्नप्रकारकाणामौषधीनां प्रयोगः मन्त्रैः सह समुपलब्धो भवति। ज्वर-यक्ष्मकुष्ठकुलक्रमागतरागविषादीनां निवारणाय बहुविधौषधीनां प्रयोगाः नानाविधानैः सह समुपलब्धाः भवन्ति। वेदमन्त्रे मनुष्याणां कल्याणभावना प्रस्फुटाः भवन्ति।

ताण्ड्यब्राह्मणे जनानां वेशभूषाया अतीव विस्तृतसजीववर्णनं मिलति।
एवं च भारतीयपरम्परायां स्तेनः कदापि न भवति—
**न मे स्तेनो जनपदे न कदर्यो न मद्यपः।**
**नानाहिताग्निर्नाविद्वान् नस्वैरी स्वरिणी कुतः।।**[३०]
अपि वास्तुशिल्पस्थापत्यकलानामप्यथर्ववेदस्योपवेदत्वेन ग्रहणं भवति।
अथर्ववेदस्य शालासूक्तद्वयम्[३१]

वेदेषु ब्राह्मणग्रन्थेषु च गृहवापीकूपतडागमण्डपादीनां निर्माणविधिः टङ्कणञ्छेदनचित्राङ्कनभूम्यादिमानादीनाम् निर्माणसहायकानां यन्त्राणां गृह्यनिर्मातॄणां वास्तुशिल्पाचार्याणां च स्थले वर्णनमस्ति। वेदेषु शिल्पशब्दमवलम्ब्य श्वेतकृष्णरक्तवर्णरूपस्य च वेदत्रयात्मकतया यज्ञान्तर्गतो विचारो लभ्यते।।[३२]

कौशिकब्राह्मणादिषु "त्रिविद्वै शिल्पं नृत्यगीतम्। कथासरित्सागरे, एतानि दिव्यं शिल्पं न मानुषम्"

इत्युल्लिखितम् वर्तते।

तैत्तिरीयब्राह्मणादिषु 'यत्ते शिल्प यत्ते शिल्प कश्यपरोयवत्।। इत्यादिवचनेषु शिल्पाचार्याणामुल्लेखः।

प्राणिजीवने पश्वादयः चिरमित्राणि सन्ति।

यथा ब्राह्मणग्रन्थेः कथिताः।

आग्नेयो वाव सर्वः पशुः।[३३] आग्नेयाः पशवः।[३४]

पञ्चपशवः इत्यस्य शतपथब्राह्मणे बोधो भवति[३५]

यथा–अश्वः गौः अविः अजः मनुष्यः। तथा च अश्वस्य चत्वारिंशदनुवंशकाः सन्ति।[३६] ईकायलस्वाहा इकृताय स्वाहा.....इत्याह।[३७]

तथा च तिर्यक्‌योनिरित्यस्यापि मानवजीवने स्थानम् महत्वपूर्णमस्ति।

कपिञ्जलः, कलविक् स्वं तित्तिरः[३८]

कक् चील[३९]

शुचिशद् (हंस)[४०]

शकुनि-अयं शुभाशुभं पश्यति[४१]

शलभः (टिड्डी)[४२]

सरधः[४३]

कुङ्गः-अयं क्षीराद् नीरं पृथक् करोति[४४]

मूषकः[४५]

सर्पः (अहिः)[४६]

वेदेषुकृषिकर्म प्रशस्यते तथां च द्यूतकर्म निन्दते–

'अक्षैर्मा दीव्यः कृषिमित् कृषस्व वित्ते रमस्व बहुमन्यमानः'।

तत्र गावः कितव तत्र जाया तन्मे विचष्टे सवितायमर्यः[४७]

एतावता मानवजीवने वेदपुराणमीमांसान्यायदर्शनादयः उपादेया सन्ति, यो मानवान् सत्कर्मणि प्रवर्तयन्ति। यदनुसारेण जीवनव्यवहारेण मानवजीवनं सफलं भवति। अतोऽस्माभिः वेदादिशास्त्राणि मानवजीवनस्य अभ्युन्नतये नूनं समादर्तव्यानि इति।।

◆

## सन्दर्भाः


१. गीता-३/१०-११।
२. शु.य. ३१-१ तथ ऋग. १०-९०।
३. १८-५।
४. ३-१४।
५. ४/१४-१८-२०।
६. पञ्चदशी १-२७।
७. ऋ० १०/१९०/१३।
८. ऋ. १०/९०/१०।
९. ऋ० १०/९०/१३।
१०. मनु० १/१३७।
११. गीता. ५/२।
१२. बृहदा.उ. ४/४७ कठो-४/१४।
१३. ऋ. ४/५/८/६।
१४. ऋ. १०/१/११।
१५. तै.व्रा.।
१६. आचार्यज्योतिषम् ३६।
१७. संस्कारभास्करे।
१८. सुजाते सूत्रस्थाने ३५/१०।
१९. सूत्रस्थान ३५/२५।
२०. मनु. ३/४८।
२१. मनु. ३/४९।
२२. शुक्लयजुर्वेद १/८८।
२३. श.ब्रा. ४/९/१/१०।
२४. पा. १/११/५।
२५. रत्नावल्याम्।
२६. नाट्यशास्त्र १-१७।
२७. नाट्यशास्त्र २८-११।
२८. अथ १२/१/४।
२९. शु.वेद ३६/१७।
३०. छान्दोग्य पुराण अनु. ५ खं. ११ प्रवा. ५।
३१. अथ. ३/१२/१३।
३२. शत. १/१/४२-३।
३३. ऐ.ब्रा. २.६।
३४. तै.ब्रा. १.१४.३।
३५. २.८ ४.१६-१०-२।
३६. तै.ब्रा. ३.८.८।
३७. तै.स. ७.३.१७।
३८. श.ब्रा. ११६.३.३ तथा ५.५.४.४।
३९. श.ब्रा.-३.३.४.१५।
४०. श.ब्रा. ५.४.३.२२।
४१. श.वा. १४.१.१.३.१।
४२. श.वा. १.२.३.९।
४३. श.वा. ३.४.३.१४।
४४. तै. २.६.२.१.२।
४५. तै.ब्रा. १.१.३.३।
४६. श.ब्रा. ११.२.६.१३।
४७. ऋग्वेद।


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 88-91

# संस्कृतवाङ्मये सूक्तिसाहित्यम्

**डॉ० विवेक पाण्डेयः***

कामपि विषमामवस्थामुपगते जीवने कर्तव्यपथे द्वन्द्वे वा समुपस्थिते मानवश्चेदनवद्यं कमपि पन्थानमास्थातुमक्षमो भवति किंकर्तव्यविमूढश्च जायते, तदा प्राक्तनानां मनीषिमान्यानां महाकवीनां च अनुभूतसम्भूताः प्रतिभासमुद्भूताः मनोरमाः सारवत्यश्च गिरः आकाशदीपायमानाः पथप्रदर्शिका भवन्ति। इमा एव सूक्तयः सुभाषितानि वा व्यपदिश्यन्ते। विश्वस्य विश्वस्मिन्नपि साहित्ये भूयस्यः सूक्तयः सुलभाः सन्ति। आसामाभा देशकालयोः सीमानमतिक्रम्य मानवजीवनस्य विविधान् पक्षान् अञ्जसा आलोकयति। शिक्षाया सदुपदेशस्य चात्र अमोघा शक्तिस्तिष्ठति। किं बहुना तत्र मन्त्रत्वं श्रुतिमाधुर्यं मनोहारित्वं च सघनं समुपलभ्यते। सूक्तीनां माधुर्यविषये आर्यासप्तशतीकारेण गोवर्द्धनाचार्येण साधु व्याहृतम्—

**सत्कविरसनाशूर्पी**
**निस्तुषतरशब्दाशालिपाकेन।**
**तृप्तो दयिताधरमपि**
**नाद्रियते का सुधादासी।।**[१]

संस्कृतसाहित्यं सूक्तिपद्यैः सुभाषितैर्वा अतितरां पर्याप्तरूपेण सुसम्भृतमिति नास्ति अविदितं सहृदयानां काव्यरसरसिकानां विदुषाम्। संस्कृते यादृशो विशालः सूक्तिनिधिर्वर्तते न तादृशोऽन्येषु साहित्येषु दृग्गोचरीभवति। सहस्राधिकवर्षेभ्योऽनुवृत्ता संस्कृतसूक्तिपरम्परा भारतीयवाङ्मयविताने निरतिशयम् अनितरसाधारणं महत्त्वमातनोतीत्यत्र नास्ति संशीतिलेशो अत्युक्तिनिवेशो वा।

सुभाषिततुल्यव्युत्पत्तिकः 'सूक्त' शब्दो वेदेषु मन्त्रसमूहार्थे स्तोत्रार्थे वा पारिभाषिकत्वं भजमानो लभ्यते। शतकत्रयकारेण भर्तृहरिणा सुभाषितार्थे एवायं सूक्तशब्दः प्रयुक्तः तथा हि- "नेतुं वाञ्छति यः खलान् पथि सतां सूक्तैः सुधास्यन्दिभिः"[२] सूक्तिशब्दोऽपि एतयोरेवार्थयोः साहित्यशा स्त्रेष् वाभियुक्तैर्विबुधैर्व्यवहृतो दृश्यते। व्यवहार- दशायामद्य सुभाषितस्य सूक्तस्य सूक्तेश्चार्थेषु कोऽपि अवधानगम्यः क्षीणो भेदोऽपि परिलक्ष्यते। स्वतन्त्राः सम्पूर्णाः अवसरोपयुक्तसापान्यतथ्यवचनगर्भाश्चमत्कारपूर्णाः हृदयग्राहिणः श्लोकाः सुभाषितपदेन व्यवह्रियन्ते तादृग्भावाभिव्यञ्जका मर्मस्पर्शिनः एकचरणात्मकाः द्विचरणात्मका वा श्लोकांशाः वाक्यात्मकाः वाक्यांशात्मका वा गद्यांशाः सूक्तयः कथ्यन्ते। यथा- "प्रमाणमन्तःकरणप्रवृत्तयः"[३] 'अविश्रमोऽयंलोकतन्त्राधिकारः"[४], "प्रियेषु सौभाग्यफला हि चारुता", "अनतिक्रमणीया हि नियतिः" "कालो हि दुरतिक्रमः" इत्यादयः।

काव्यनाटकादिषु अर्थान्तरन्यासालङ्कारप्रसङ्गे यत्र विशेषः सामान्येन सामान्यं वा विशेषेण समर्थ्यते तत्र

* एसोसिएट प्रोफेसर, संस्कृतविभाग, हंडिया पी.जी. कालेज हंडिया, इलाहाबाद

सामान्यरूपेण कृताः प्रयोगा अपि सूक्तिरूपेण लोके प्रचलिताः सन्ति। महाकवेः भारवेः अर्थान्तरन्यासान्तर्निष्ठाः सूक्तयः संस्कृतसाहित्येऽत्यन्तं प्रसिद्धिं गताः पण्डितानां वाग्व्यवहारविचक्षणानां जिह्वाग्रे यथावसरं नरीनृत्यमाना अवलोक्यन्ते च। यथा- "हितं मनोहारि च दुर्लभं वचः", "गुणानुरोधेन विना न सत्क्रिया", "विचित्ररूपाः खलु चित्तवृत्तयः", "सुदुर्लभाः सर्वमनोरमा गिरः", "वरं विरोधोऽपि समं महात्मभिः" प्रभृतयः।

संस्कृते सूक्तीनां सुभाषितानां च संग्रहस्यापि सुदृढा परम्परा सुदीर्घकालात् प्रवृत्ता अद्यपर्यन्तं प्रचलन्ती जागरूका तिष्ठति। स्वाश्रयप्रदातृभिः रसिकैः राजमण्डलैः प्रेरिताः स्वान्तःकरणनोदिता वा मनीषिणो विद्वांसः पूर्वकालवर्तिनां समकालवर्तिनां च कृतिषु वर्तमानाः सूक्तीः संगृह्य ग्रथयामासुः। एषु संग्रहग्रन्थेषु अनेकेषां अज्ञातनाम्नां कवीनामपि सदुक्तयः संगृहीताः सन्ति। एतेन संस्कृतसाहित्यस्य तदध्येतृणां च महानुपकारो जातः। सूक्तिसंग्रहाणां कारणादेव चित्तपादयो नैके लुप्तप्रायाः कविवराः प्रकाशमवाप्ताः। एषु संग्रहग्रन्थेषु प्रायः सहस्रकवीनामुल्लेखोऽस्ति, येषु कतिपयानामेव कृतयो मूलरूपेण पूर्णशः खण्डशो वा उपलभ्यन्ते साम्प्रतम्। सर्वप्राचीनः सूक्तिसंग्रहः 'सुभाषितरत्नकोषः' मन्यते यः कवीन्द्रवचनसमुच्चयनाम्ना डॉ. एफ्.डब्ल्यू.थामसमहोदयेन कलिकातातः द्वादशाधिकोनविंशतिशततमे (१९१२) खीष्टीये वत्सरे नेपालीयाक्षरवत्पाण्डुलिपेः सम्पादनं विधाय प्राकाश्यं प्रापितः। एकादशशततमे खीष्टाब्दे विद्याधरपण्डितेन संकलितोऽयं 'सुभाषितरत्नकोषः' ससमीक्षं संस्कृत्य प्रो. डी.डी. कोसम्बी, प्रो. वी.वी. गोखलेमहोदयाभ्यां 'हार्वर्ड ओरियण्टल सिरीजस्य' द्विचत्वारिंशत्तमग्रन्थरूपेण प्रकाशितः। सम्प्रत्यस्य आँग्लभाषया जातोऽनुवादोऽपि प्रकाशितो वर्तते। असंशयमयं बहूनां ज्ञाताज्ञातानां कवीनां सूक्तीनां मनोरमो हृदयावर्जकश्च संग्रहोऽस्ति।

अपरश्चैकः सूक्तिसंग्रहः सदुक्तिकर्णामृतनाम्ना राजते, यः खलु बंगनरेशस्य धर्माध्यक्षस्य बटुदासस्य पुत्रेण श्रीधरदासेन संकलितः श्रीधरदासस्य समयः इतिहासविद्भिस्त्रयोदशशतकस्य प्रथमश्चरणो निर्धारितोऽस्ति। संग्रहश्चायं महत्त्वादुपादेयत्वाच्च सूक्तिसंग्रहेषु अद्वितीयं स्थानं भजते। सम्पूर्णोऽयं ग्रन्थो अमर-शृंगार-चाटु-अपदेश-उच्चावचनामकेषु पञ्चसु प्रवाहेषु विभक्तोऽस्ति। प्रतिप्रवाहं वीचयः प्रतिवीचि पञ्चपद्यानि सन्ति। श्लोकसंख्या चात्र अशीत्यधिकत्रयोविंशतिशतम् अस्ति। त्रयोदशशताब्द्यां जातस्य यादवनरेशस्य कृष्णस्य करिवाहिनीपतिना जल्हणेन सूक्तिमुक्तावलीनामकस्य सूक्तिसंग्रहग्रन्थस्य संकलनमकारि। अस्य कर्तृत्वविषये विचित्रमेकं तथ्यं प्रसिद्धिं प्राप्तमस्ति यत् भानुकविना स्वाश्रयप्रदातुः जल्हणस्य नाम्ना सूक्तिमुक्तावल्याः रचना व्यधायि। एतत्तथ्यसमर्थकमेकं पद्यमपि लभ्यते-

**शाकेऽङ्काद्रीश्वरपरिमिते वत्सरे (११७९) पिङ्गलाख्ये**
**चैत्रे मासि प्रतिपदि तिथौ वासरे सप्तसप्तेः।**
**पृथ्वीं शासत्यतुलमहसा यादवे कृष्णराजे**
**जल्हस्यार्थे व्यरचि भिषजा भानुना सेयमिष्टा।।**

किन्तु वैद्यभानुना जल्हणविषये कृतोऽयमुल्लेखः तथ्यमिदं निराकर्तुमलम्—

**साहित्यविद्याहृदयं ज्ञातुमिच्छसि चेत्सुखम्।**
**तत्पश्य जल्हणकृतां सूक्तिमुक्तावलीमिमाम्।।**

अत्र पद्यानां चयनं रमणीयं हृद्यं चास्ति। अस्या विभागाः 'पद्धति' शब्देन कृताः सन्ति। तत्र कविपद्धतौ कृता ज्ञाताज्ञातानां प्रशंसा ऐतिहासिकं महत्त्वं बिभर्ति।

दामोदरपुत्रेण शार्ङ्गधरेण संगृहीतायाः शार्ङ्गधरपद्धतेः सूक्तिसंग्रहेषु महत्त्वपूर्णं स्थानमस्ति। दामोदरः शाकम्भरीदेशाधिपतेः चौहानवंशीयनरेशस्य हम्मीरस्य सभापण्ठितस्य राघवदेवस्य पुत्र आसीत्। तस्यैव ज्येष्ठपुत्रेण संगृहीता एषा पद्धतिः परिच्छेदेषु विभक्ता विपुलाकारा संकलनदृष्ट्या अनुपमा चास्ति। अस्या अनेक श्लोकाः कालक्रमेण विलुप्ताः, अतः न सर्वे प्रकाशिताः। अशीत्यधिकाष्टादशशततमे वर्षे (१९८०) डॉ. पीटर्सनेन बाम्बेसंस्कृतसिरीजक्रमे प्रकाशितोऽप्यनुपलभ्य एवायं संग्रहग्रन्थः।

कश्मीरकविना बल्लभदेवेन सुभाषितावलीनामकः एकः सुभाषितसंग्रहग्रन्थो व्यरचि, यत्र एकाधिकशतं पद्धतयः (१०१) अष्टाविंशत्यधिकपञ्चत्रिंशच्छतंश्लोकाश्च सन्ति। शार्ङ्गधरपद्धत्यपेक्षया इयं लघीयसी। संग्रहेऽस्मिन् एकादशशतश्लोकाः सन्ति। नन्दनपण्डितेन संकलितः 'प्रसन्नसाहित्यरत्नाकरः' अद्यावधि अप्रकाशितोऽस्ति। अयं हरप्रसादशस्त्रिणो नेपालग्रन्थसूच्यनुसारं नेपालदेशस्य वीरपुस्तकालये सुरक्षितो विद्यते। संग्रहकारस्य कालः पञ्चदशशताब्द्याः उत्तरार्द्धभागोऽनुमीयते। सुभाषितरत्नकोषस्य सम्पादकाभ्यां तत्प्रस्तावनायां ग्रन्थस्यास्य परिचयः सविस्तरं दत्तोऽस्ति। बंगीयेन कविना रूपगोस्वामिना कृष्णपरकसूक्तीनां संग्रहः पद्यावलीनाम्ना कृतः। अत्र सपादशतकवीनां षडशीत्यधिकत्रिशतश्लोकाः संगृहीताः सन्ति। चतुर्दशशताब्द्याः सूर्यकलिङ्गरायेण दाक्षिणात्यकवीनां सुरुचिपूर्णपद्यानां मनोरमः संग्रहो व्यधायि यः सूक्तिरनहारनाम्ना ख्यातः अनन्तशयनग्रन्थमालातः प्रकाशितश्च।

सिद्धचन्द्रमणिकृतः 'सूक्तिरत्नाकरः', हरिदासकृतः 'प्रस्तावरत्नाकरः', हरिकविकृता 'सुभाषितहारावली', सुन्दरदेवकृतं 'सूक्तिसुन्दरम्', व्रजनाथकृता 'पद्यतरङ्गिणी-, वेणीदत्तकृता 'पद्यवेणी', 'हरिभास्करकृता 'पद्यामृततरङ्गिणी', भट्टगोविन्दजित्कृतं 'सभ्याभरणम्' नारोजीपण्डितकृता 'सूक्तिमालिका', लक्ष्मणभट्ट-अंकोलकरकृता ''पद्यरचना'' श्रीवरेण जोनराजस्य शिष्येण कृता 'सुभाषितावलिः' मणिरामदीक्षितेन कृतः 'श्लोकसंग्रहः' इत्यादयोऽन्येऽनेके सूक्तिसंग्रहाः उल्लेखयोग्याः सन्ति, येषु केचन अद्यापि अप्रकाशिताः सन्ति।

निर्णयसागरप्रेसमुम्बईतः सुभाषितरत्नभाण्डागारनामा अतिप्रसिद्धः संग्रहः पञ्चत्रिंशदधिकोनविंशतिशततमे (१९३५) खीष्टाब्दे प्रकाशितोऽभवत्। श्रीकाशीनाथपाण्डुरंगपरब्रह्ममहाभागेन संकलितः श्रीवासुदेवलक्ष्मणपणसीकर-महोदयेन परिष्कृतः ततोऽप्यनन्तरं श्री पी. रामाचार्यमहोदयेन परिवर्धितश्चायं संग्रहग्रन्थः संख्यादृष्ट्या प्रचारप्रसारदृष्टया च सूक्तिसंग्रहग्रन्थेषु मूर्द्धन्यतामधिगच्छति। भाण्डागारेऽस्मिन् पारेऽयुतं श्लोकाः सप्तसु प्रकरणेषु विभक्ताः सन्ति। कवीनां नामोल्लेखोऽत्र नास्ति विशालकायोऽयं संग्रहः विविधाभिः सूक्तिभिः भिन्नरुचीन् जनान् विनोदयितुं पर्याप्तं सामग्रीसमुच्चयं परिवेषयति। गोडेविरचिते इतिहासपुस्तके रामयाज्ञिकेन संकलितस्य शृङ्गारालापस्योल्लेखो लभ्यते। सहस्राधिकानां शृङ्गाररसमयानां श्लोकानां संग्रहोऽयं नितरां महनीयः।

जैनकवयोऽपि सुन्दरश्लोकमयान् सुभाषितसंग्रहान् प्रणीय नीतिमयान् शुष्कान् उपदेशान् सरसान् लोकरञ्जकान् च-विधातुं प्रायतन्त। जैनसुभाषितग्रन्थेषु अमितगतेः 'सुभाषितरत्नसन्दोहः' सोमप्रभाचार्यस्य 'सूक्तिमुक्तावली' चेति प्रामुख्यं भजतः अमितगतेः स्थितिकालः इतिहासज्ञैः दशमशतकान्त्यचरण-एकादशशतकस्यादिमचरणयोः मध्ये निर्णीतः। 'सुभाषितरत्नसन्दोहः' संग्रहग्रन्थो नास्ति, अपि तु एकस्य कवेः रचनास्ति सोमप्रभस्य 'सूक्तिमुक्तावली- एकं शतकमस्ति। सोमप्रभो हेमचन्द्राचार्यस्य सतीर्थ्यः आसीत्। समयः खलु तस्य द्वादशशतकस्योत्तरार्धभागः।

संस्कृतसाहित्ये न किमपि क्षेत्रमेतादृशं यत्र लक्षाधिकाः सूक्तयो न स्युः प्रत्यग्रं डॉ. भास्करगोविन्दघाणेकर महोदयेन 'वैद्यकीयसुभाषितसाहित्यम्' नामकैः संग्रहः प्रकाशितः यत्र विविधेभ्यः आयुर्वेदग्रन्थेभ्यः स्वास्थ्यसंबन्धीनि

सुभाषितानि समाहृतानि। सन्ति। अनेनैवप्रकारेण व्याकरणादीनां शास्त्राणामपि सूक्तीः संगृह्य संग्रहग्रन्थाः निर्मातुं शक्यन्ते। भारतीयाधिशासनस्य साहित्याकादमीद्वारा साहित्यरत्नकोशनिर्माणक्रमे प्रो. के.ए.एस्.अय्यरमहोदयस्य, डॉ. वी. राघवन् महोदयस्य च संकलयितृत्वे भागद्वयात्मकः सुभाषितसंग्रहः एकः प्रकाशनं नीतः। अत्र मूलस्रोतः संकेतोऽन्ते श्लोकानुक्रमणिका च ग्रन्थस्य महत्त्व वर्द्धयतः। अस्मिन्नेव क्रमे पद्मभूषण-आचार्य बलदेवोपाध्यायद्वारा रचिता सरसश्लोकसंग्रहमयी 'सूक्तिमुक्तवली' गोकुलनाथोपाध्यायप्रणीता 'सूक्तिमुक्तावली', श्रीवासुदेवद्विवेदिशास्त्रि निर्मिता 'हास्यविनोदवाटिका' च रमणीयैः व्यवहारोपयोगिभिश्च श्लोकैः जनमनस्तुष्टये कल्पन्ते। संस्कृतजगतो दौर्भाग्यात् अकाले कालकवलितस्य प्रथितप्रकर्षस्य प्राच्यविद्याविदः, डॉ. लुडविक् स्टर्न बाखमहोदयस्य विशंतिखण्डात्मक-महासुभाषितसंग्रहमहायोजनां सफलयितुं बद्धपरिकरेण होशियारपुरस्थवैदिकशोधसंस्थानेन सप्तवर्षाभ्यन्तरे एव पञ्च भागाः प्रकाशिताः, येषु पञ्चमस्य भागस्य समुद्घाटनं पञ्चमे विश्वसंस्कृतसम्मेलने काश्यां समपद्यत। परमेश्वरप्रसादात् संस्थानस्य निरतिशयोत्साहाच्च सर्वेषु भागेषु प्रकाशितेषु एष महासुभाषितसंग्रहः सर्वानन्यान् संस्कृतसूक्तिसंग्रहान् स्वगुणगणगरिम्णा नूनमतिशयिष्यते।

अपि च, संस्कृतसाहित्ये यावन्तो नीतिग्रन्थाः धर्मोपदेशग्रन्थाः, धर्मार्थकाममोक्षान्यतयोपदेशपरा ग्रन्था, मुक्तककाव्यरूपाश्च एककर्तृकश्लोकसंग्रहस्वरूपाश्च सन्ति तेऽप्यसंशयं संस्कृतसूक्तिसाहित्यक्षेत्रे परिगणनीया निवेशनीयाश्च। एवंविधेषु सूक्तिग्रन्थेषु धम्मपदम्, भर्तृहरिकृतं शतकत्रयं, धनराजकृतं शतकत्रयं, शिल्हणकृतं शान्तिशतकम्, भल्लटकृतं भल्लटशतकम् क्षेमेन्द्रविरचिताः समयमातृका-सेव्यसेवकोपदेशप्रभृतयो ग्रन्थाः सर्वे प्रायः सूक्तिसाहित्ये उल्लेखनीयतामर्हन्ति। सार्वभौमसंस्कृतप्रचारसंस्थानाध्यक्षेण स्व० श्रीमता वासुदेवद्विवेदिशास्त्रि महोदयेन सूक्तिगुच्छकसंग्रहरूपा 'दीपमालिका' इति कृतिः विरचिता प्रकाशिता च।

अन्ते, संस्कृतसूक्तिसाहित्यं मुक्तकण्ठं प्रशंसतो जगद्विख्यातस्य भारतीयसाहित्येतिहासलेखकस्य विण्टरनित्जमहोदयस्य हृदयोद्गारमुदाहृत्य विरम्यते मया—

"Perhaps Indians have not attained such perfect mastery in sphare as in gnomic poetry. They have not more wonderfully succeeded in anything as in the art of giving brief and accurate expression to an idea in two lines."

◆

**सन्दर्भाः**


१. आर्यासप्तशती, गोवर्धनाचार्य
२. नीतिशतका, भर्तृहरि
३. अभिज्ञानशाकुन्तल-कालिदास १/१९
४. अभिज्ञानशाकुन्तल-कालिदास
५. कुमारसम्भव-कालिदास
६. वा.रा. ५.१६.३


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 92-105

# योगतन्त्रागमे श्रीविद्या (कालीतत्त्वावधारणा)

डॉ० राघवेन्द्र जी दुबे*

अविद्यया मृतयुं तीर्त्वा विचद्ययामृतमश्नुते, सा विद्यैव सर्वत्रागमेषु कालीरूपेण समाख्याता, सैव ब्रह्मविद्या पराशक्तिः स्वरसंवाहिनी परावाक् पूर्णाहन्ता संवित् 'काली' आदिनाम्नो व्यवह्रयते। कथं सा काली इति निरूप्यते–कालीशब्दः 'लि किल विल विक्षेपे' 'कल गतौ' कल शब्दे 'कलसंख्याने' इति धातुचतुष्टयात् कर्मणि घञ्प्रत्ययान्तात् ङीपि कृते सिद्ध्यति। एवं च कल्लयते यया, सर्वं ज्ञायते स्वात्माभेदेन परामृश्यते यथा, संख्यायते प्रमातृप्रमेयादित्रिपुटीवर्गः परस्परं व्यपोह्य इदमिदं नानिदमिदं प्रतिनियततयाऽवस्थाप्यते गम्यते भेदितः सकलोर्थः स्वरूपमारूह्यते दर्पणगतप्रतिबिम्बवत् स्वस्मादव्यतिरिक्तत्वेप्यवभास्यते यया। शब्द्यते स्वात्मपरामर्शशेषतां नीयते सर्वविकल्पज्ञानादि विलोप्यते यया सा काली।

**प्रणमामि महादेवीं मातृकां परमेश्वरीम्।**
**कालहल्लोहलोल्लोलकलनाशमकारिणीम्।।**
**यदक्षरेकमात्रेपि संसिद्धे स्पर्धते नरः।**
**रविताक्ष्र्येन्दुकन्दर्पशंकरानलविष्णुभिः।।**
**यदक्षरशशिज्योत्स्नामण्डितं भुवनत्रयम्।**
**वन्दे सर्वेश्वरीं देवीं महाश्रीसिद्धमातृकाम्।।**
**यदक्षरमहासूत्रप्रोतमेतज्जगत्त्रयम्।**
**ब्रह्माण्डादिकटाहान्तं तां वन्दे सिद्धमातृकाम्।।**
**यदेकादशमाधारं बीजं कोणत्रयोद्भवम्।**
**ब्रह्माण्डादिकटाहान्तं जगदद्यापि दृश्यते।।**
**अकचादिटतोन्नद्धपयशाक्षरवर्गिणीम्।**
**ज्येष्ठाङ्गबाहुपादाग्रमध्यस्वान्तनिवासिनीम्।।**

अस्यां स्थितौ अ, क, च, ट, त, प, य, श, इति अष्टवर्गाणां क्रमेण ब्राह्मी–माहेश्वरी–कौमारी–वैष्णवी-वाराही-इन्द्राणी-चामुण्डा-महालक्ष्म्यादि-भिर्व्यामोह्य देहेन्द्रियादिष्वेवात्मत्वं ग्राह्यति। तदुक्तं त्रिपुरामहिम्नि स्तोत्रे सकलमातृकाप्रपंच–मूलभूतप्रत्याहारन्यायेनाकारहकार–समाहारसमुपहृत-पराशक्तिसंस्त्वे–

**पंचाशन्निजदेहजाक्षरभवैर्नानाविधैर्धातुभिः।**
**बह्वर्थैः पदवाक्यमानजकैरर्थाविनाभावितैः।**

* एसो० प्रोफेसर, सांख्ययोगतन्त्रागम विभाग, सं.सं.वि.वि., वाराणसी

**विश्वं साभिप्रायवदर्थकर्मफलदैः ख्यातैरनन्तैरिदं**
**व्याप्य चिदात्मनाहमहमित्युज्जृम्भसे मातृके।।**
**अयि विश्वप्रपंचाधिष्ठातृमूलभूते मातृके।।**

त्वं नानाविधैधातुभिर्विश्वं व्याप्यचिदात्मनाहमहमित्युज्जृम्भसे इति सारांशः। पंचाशन्निजदेहजाक्षरभवैः, निजदेहः=पराशक्तेः शरीरं तस्माद् जातानि=आविर्भूतानि, आविर्भूय बहिः प्रसृतानि विश्ववस्तूनि तेभ्यो भव उत्पत्तिर्येषां तैः। एवं परशक्तेरक्षरमयत्वं सर्वत्रागमे प्रसिद्धम्। यथोक्तमभियुक्तैः-

**अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्।**
**विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः।।**
**शब्दस्य परिणामोऽयमित्याम्नायविदो विदुः।**
**छन्दोभ्य एव प्रथममेतद्विश्वं व्यवर्तत।।**

स्थूलसूक्ष्मात्मकमेतज्जगत् स्थूलतया व्यक्तम्, सूक्ष्मतया अव्यक्तमित्युच्यते। तत्र नाना नामरूपात्मकं पदार्थात्मकं दृश्यं जगति नित्यमेव स्थूलम्, उदयास्तदशा तु सर्वदा शक्तिलग्नत्वाभावे तस्य प्ररोहासम्भवात्। अव्यक्तः शक्त्यात्मको जगत आश्रयः, सर्वस्यापि प्रत्यय विमर्शात्मकस्य जगतिश्चिद्राहित्ये उत्पद्यमानत्वासम्भवात्। न हि जलराहित्ये तरंगबुद्बुदानामुत्पद्यमानता संघटते। अतो लोकस्थितत्युपपादनायैकस्यैव तत्त्वस्य नानात्मकता भेदाभेदसहिष्णुता लोकव्यवहारसंसाधनाय परिकल्प्यते नानाविधद्रष्टव्यसिद्धपेक्षर्यकस्येव वस्तुनो भेदं परिकल्प्योपासना क्रियते। न तूपास्यवस्तुनो वास्तविको भेदः। उपास्योपासक-भेदोपि परिमितशक्तीनां मितयोगिनामेव, न तु दिव्यसिद्धानाम् स तु चिदैक्य-प्रतिपत्तिदार्ढ्यलक्षणजीवनमुक्त्यैकरसाश्रितिमेकात्मतया सन्ततमुपस्ते। तच्च पूर्वोक्तचर्चितविश्वब्रह्माण्डमण्डानामवान्तरकक्षाविभागेनोपन्यस्य त्वात्मभित्ति-लग्नतां सर्वानुभवसाक्षिकं विज्ञाय चतुर्विधत्वेन समुपस्थाप्यते।

तदुक्तम्-

**शक्तिर्माया प्रकृतिः पृथ्वीति चतुर्विभागमण्डवत्।**
**यश्च विभागोस्य बहुधा सर्वं स्थितमेतत्।।**

सर्वमपि ब्रह्माण्डं चतुरण्डयुक्तम् शक्त्यण्ड-मायाण्ड-प्रकृत्यण्ड-पृथिव्यण्डभेदात्। तन्त्रेषु विश्वकल्पनायां षट्त्रिंशत्तत्त्वानि स्वीक्रियन्ते। तद्यथा-

१. शिवः २. शक्तिः ३. सदाशिवः ४. ईश्वरः ५. शुद्धविद्या, ६. माया ७. कला ८. विद्या (अशुद्ध विद्या) ९. रागः १०. कालः ११. नियतिः १२. पुरुषः १३. प्रकृतिः १४. बुद्धिः १५. अहंकारः १६. मनः १७. श्रोत्रम् १८. त्वक् १९. चक्षुः २०. जिह्वा २१. घ्राणः २२. वाक् २३. पाणिः २४. पादः २५. पायुः २६. उपस्थः २७. शब्दः २८. स्पर्शः २९. रूपम् ३०. रसः ३१. गन्धः ३२. आकाशः ३३. वायुः ३४. अग्निः ३५. सलिलम् ३६. भूमिः।

इत्येतानि षट्त्रिंशत् तत्त्वानि विश्वब्रह्माण्डत्वेनाभिधीयन्ते। तत्र शुद्धाध्वा, शुद्धाशुद्धाध्वा, अशुद्धाध्वेति त्रिधा विभागः शिवादीनि शुद्धविद्यान्तानि पंचतत्त्वानि शुद्धाध्वेत्युच्यन्ते। अनन्तरं माया कला विद्या (अशुद्ध विद्या) रागः कालो नियतिः पुरुष इति सप्ततत्त्वानि शुद्धाशुद्धध्वेति। अवशिष्टान्यशुद्धाध्वनाम्नोच्यन्ते।

सर्वमणि कर्मजातं शक्तिसमाराधनायैव, शक्तिरपि योगतन्त्रसाहित्ये विमर्शरूपिणी सर्वाकारयोगिनी

चिद्रूपा निर्धारिता। सा विविधैरूपायैरात्मसात्कर्तुं शक्यते। तद्वशीकारायैवाष्टांगाभ्यसनं क्रियते। तत्र श्वासोच्छ्वासक्रमेण सगर्भनिगर्भनेदेन प्राणायामेन साध्यते, केचन ज्ञानयोगेन, अपरे शक्तियोगेन वा तल्लाभाय यतन्ते। साधकास्तन्त्रागमयोरसाध्यसाधनाय, अलभ्यलाभाय वर्णराशिमयं मातृकाचक्रं मालिनीचक्रं वा भूतलिपिं वाराधयन्ति। शरीरमेव तदाराधनक्षेत्रं स्वीकृत्य तत्र षट्चक्राणि भावयित्वा सच्चिदानन्दघन–मात्मतत्त्वं मार्ग्यन्ते। तदर्थमेव केचन ब्रह्मविद्याः, केचन योगशास्त्राणि केचन हठयोगादीनि साधनतयोपकल्पते। योगतन्त्रे तु कुण्डलिनीयोगस्यप्राशस्त्यं माहात्म्यं वर्णितं लभ्यते। सा कुण्डलिनीशक्तिरेव शक्तिनाम्ना कालीनामा कुलांगना कौलिनी इति शब्दैर्व्यपदिश्यमानराजते। अत एव ललितासहस्त्रनामेषु कुलांगना कुलान्तः स्था कौलिनी कुलयोगिनी। अकुला इत्यादीनि ललिताया नामानि चरितार्थानि। मूलाधारकर्णिका मध्यगतो विन्दु/कुलकुण्ड–नाम्नोच्यते। स्वत्व वंशपरम्पराप्रात्यो मार्गः कुलसम्बन्धित्वात् कौलः।

तदुक्तं व्रतखण्डे–

**यस्य यस्य हि या देवी कुलमार्गेण संस्थिता।**
**तेन तेन च सा पूज्या बलिगन्धानुलेपनैः।।**
**कुलपूजां तु नियतं यः करोति स कौलिकः।**
**नीचोपि वा सकृद् भक्त्या कारयेद् यः कुलार्चनम्।।**
**स सद्गतिमवाप्नोति किमुतान्ये द्विजातयः।**
**तस्मात् सर्वप्रयत्नेन सर्वावस्थातु सर्वदा।।**
**कुलपूजारतो भूयादभीष्टफलसिद्धये।**
**कुलपूजासमं नास्ति पुण्यमन्यज्जगत्त्रये।।**
**नैवेद्यैर्विविधैश्चैव पूजयेत् कुलमार्गतः।। इति।।**

कुलशब्दसम्बन्धादेव कालीपूजापि कौलपूजेति लोके प्रसिद्धा। एतावन्तं व्यापकमर्थजातम् विभ्रत कुलशब्दः कुलोपासना च नोपेक्षितव्या इति कृत्यैव कुलोपसा, कुलयागः, कुलेज्येत्यादि शब्दाः कुलदर्शने समाद्रियन्ते। सहस्त्रारात् स्त्रवदमृतं कुलामृतम्। उपास्योपासकवस्तुजातस्यौचित्येन साजात्यातु तत्समुदाय प्रतिपादकं शास्त्रमपि कुलम्। 'कुलपुस्तकानि च गोपयेद्यस्तु' इति कल्पसूत्र प्रयोगात् कुलशास्त्रपुस्तमपि कुलशब्देनोच्यते। 'दर्शनानि तु सर्वाणि कुलमेव विशन्ति हि' इत्यागमवचनाच्च–'न कुलं कुलमित्याहुराचारकुलमुच्यते' इति भविष्योत्तरपुराणवचनम्। आचारोपि कुलम्। पातिव्रत्यादि गुणराशिशीलो वंशः कुलम्। कुलं जनपदे गृहे। "सजातीयगणे गोत्रे देहेपि कथितं कुलम्" इति विश्वः।

**पूजनीया जनैदेवी स्थाने स्थाने पुरे पुरे।**
**गृहे गृहे शक्तिपुरेग्रामे ग्रामे वने वने।**

अथ स्थितं रक्तं सहस्त्रदलकमलमपि कुलम्, तत्कर्णिकायां कुलदेवी दलेषु कुलशक्तयश्च–'कर्णिकामध्यतो देवी कुलदेवी च संस्थिता' इति स्वच्छन्दतन्त्रे। बाह्याकाशावकाशे चक्रे विलिख्य तत्र. पूजादिकं कौलमिति कश्चित्। शिवशक्ति–सामरस्यं वा कौलम्।

**कुलशक्तिरितिप्रोक्तकुलं शिव उच्यते।**
**कुले कुलस्य सम्बन्धः कौलमित्यभिधीयते।।**

कुल शब्दो भारतीयवाङ्मये महतादरेण प्रयुक्तो दृश्यते गुरुकुलम्, कुलव्यवस्था, सत्कुलम्, असत्कुलम्, कुलं कर्पटंच संरक्षणेनेव चिरं तिष्ठतीति लौकिकी प्रसिद्धिः।

**कुलक्षये प्रणश्यन्ति कुलधर्माः सनातनाः।**
**धर्मे नष्टे कुलं कृत्स्नमधर्मोऽभिभवत्युत।। इति।।**

प्रसंगेष्वेतेषु कुलशब्दस्य समादरपूर्वकमेव संस्मरणं समाजे। एतत्सर्वमनुसृत्यवैवोपासनाभागादि-कुलोपासनाप्रक्रिया समादरपूर्विका प्रचलितासीत्। श्रीतन्त्रालोकः शैवशाक्तदर्शनयोः प्रचलितपरम्पराणां प्रत्यभिज्ञापक आकरग्रन्थः। तत्र त्रिक्-प्रत्यभिज्ञातन्त्र-कुलमार्गाणां दर्शनं महता श्रमेण संगृह्य ग्रन्थरूपतया लोकहिताय महामाहेश्वराभिनवगुप्तेन समुपस्थापितम् अतः कुलप्रक्रिया–यास्तदुपासनायाः संक्षिप्तं वर्णनमत्राभिनवगुप्तमहोदयेन संग्रहीतं दीयते।

यद्यपि सत्तमेष्वपि मार्गेषु कालक्रमेणानधिकृतव्यक्तिप्रवेशाद् दोषाः संक्रमन्ते, तेन च काचिद् विशृंखला परम्परापि जनजीवनं प्रभावयति। नैतेन कापि पद्धतिर्मूलतया दुष्टा विगीता वेत्यभिधातुं शक्यते। कल्प्यते कुलोपासना–विषयेप्येतादृशमेव कुचक्रं समुज्जृम्भितमासीत्। येनैष सुप्रतिष्ठितो मार्गो देशेस्मिन् नामशेषतां गतः। अद्य तु कौल शब्दएवं वीभत्संभाव-व्रातमभिव्यक्ति। एतानानुमीयते मध्यकालप्रवाहे कौला भ्रष्टाचारिणोध्यात्मविरता इन्द्रियलौल्ययुताः समभूवन्। तेनैषा परम्परा लोकोद्वेगकरी जगुप्सामयी च संवृत्ताः, किन्तु श्रीतन्त्रालोके कुलप्रक्रियावर्णनं दृष्ट्वा तस्य परित्यागमकल्याणकरं मन्वानोहं संक्षेपेण परिचयं दातुं कामये।

कुलशब्दस्यानेकेर्थां उपलभ्यन्ते। यदुक्तमद्रष्टव्यलञ्च परमेशस्य शक्तिः सामर्थ्यमूर्ध्वता। स्वातन्त्र्यमोजो वीर्यश्च पिण्डः संविच्छरीरकम्।

व्याख्यातं य कौलमार्गविषयोमहामहेश्वरेण जयरथेन। तद्यथा—

१. कुलं हि परमाशक्तिः...........।
२. लयोदयश्चित्स्वरूपस्तेन तत्कुलमुच्यते...........।
३. समभावबोधममलं कुलं सर्वत्र कारणम्...........।
४. सर्वकर्तृविभुसूक्ष्मं तत्कुलं वरवर्णिनि...........।
५. सर्वेशं तु कुलं देवि सर्वं सर्वव्यवस्थितम् ...........।
६. शक्तिगोचरणं वीर्यं तत्कुलं विद्धि सर्वगम् ...........।
७. कुल स परमानन्दः...........।
८. कुलमात्मस्वरूपं तु...........।
९. कुलं शरीरमित्युक्तमिति...........।

भासुरानन्दनाथापरनामधेयेन भास्कररायेण ललितासहस्रनामव्याख्याने सौभाग्यभास्करे कुलशब्दस्यानेकेर्थाः प्रत्यभिज्ञापिताः। तथा च कुलसजातीय समूहः, सह चैकज्ञानविषयत्वरूपसाजात्यापन्नज्ञातृज्ञेयज्ञानरूपाध्वसायात्मकः। ''घटमहं जानामि'' इत्येव ज्ञानाकाराद् ज्ञानभासनयानुव्यवसायापेक्षायां दीपभासनाय दीपान्तरापेक्षापत्तेः इति। भगवत्यादैरप्युक्तम्–जानामीति तमेव भान्तमनुभात्येतत् समस्तं जगदिति। तत्त्वत सा त्रिपुटी कुलमित्युच्यते इति। चिद्गगन–चन्द्रिकायामपि व्याख्यातम्मेयमातृमितिलक्षणं कुलं प्रान्ततो व्रजतिमान यत्र विश्रमम्। तत्पदं

तव तुरीयमम्बिके यन्महद्भिरूपास्यमिष्यते।। इति।।

अद्य ह्येनां ब्रह्मरन्ध्रे ब्रह्मरूपिणीमाति''। दशमहाविद्यासु काश्चिद् विद्या: केवलं दक्षिणमार्गस्य आचारै: पूजिता भवन्ति यथा–कमलाभुवनेश्वरी अपि च धूमावती।[1] काश्चित् विद्या: केवलं भावमार्गे पूजिता भवन्ति यथा–काली षोडशी ताराछिन्नमस्ता, बगलामुखी मातंगी त्रिपुरभैरवीति। तथा च त्रिपुरसुन्दर्या: पूजा दक्षिणवामयो: मार्गयो: प्रशस्तास्ति यद्यपि दक्षिणमार्गस्य देवीनामपि पूजा वाममार्गपद्धत्या कर्तुं शक्यते। एतासां विद्यानामुपासनायै[2] क्रमश:–

१. महानीलक्रम: (काली)
२. महाचीनक्रम: (तारा)
३. दिव्यचीनक्रम: (चिन्नमस्ता)
४. गन्धर्वक्रम: (घूमावती)
५. महागन्धर्वक्रम: (षोडशी)
६. सौभाग्यक्रम: (बगला)
७. जीवचक्रक्रम: (भैरवी)
अथवा स्वपुष्पक्रम:
८. ब्रह्मभावक्रम: (भुवनेश्वरी)
९. राजमार्गक्रम: (मातंगी)
१०. कलार्चनक्रम:[3] (कमला)।

वाममार्गसरण्या पूजितानां देवीनां पूजनक्रमे औपचरिकेणार्थनेन साकं केचित् विशेषरहस्यमया: विषया: तन्त्राणां साहाय्येन सम्मिलिता: जाता:। यथा–पंचमकार:-मद्यमांसमीनमुद्रामैथुनानि। एभि: पंचमकारै: देवीपूजनस्य प्रचलनं कौलिकाचारे एवं च प्रमुखत: काली कुलस्य देवीनां पूजने संजातम्। पंचकार: कौलमार्गोपयोगतया "कुलद्रव्यमपि" कथ्यते। कुलार्णवे (पंचमोल्लास;) श्यामारहस्यादिग्रन्थेषु च एतेषां विशदं वर्णनमप्यास्ते ब्रह्मपुराणे[1] देव्या: प्रसन्नतायै मद्यमांसादिभि: पूजनस्य विधानमस्ति। यै: प्रसन्ना भूत्वा सा भक्तानां मन: कामनां पूरयति। महानिर्वाणं[2] पंचमकार: देवीपूजाया: पंचतत्त्वं कथ्यते–

**वीरसाधनकर्माणि पंचतत्त्वोदितानि च।**
**मद्यं मासं तथा मत्स्ये मुद्रा मैथुनमेव च।।**
**एतानि पंच तत्त्वानि त्वया प्रोक्तानि शंङ्कर।।**

प्राय: सर्वेषु तान्त्रिकग्रन्थेषु पंचमकारस्य माध्यमेन देवीपूजनस्य दृढ़ा पुष्टि: कृता।

**तन्त्रै: पूजनस्य द्वौ पक्षौ प्रस्तुतौ–**

(१) व्यवहारिक: स्थूलो वा (२) दार्शनिक आध्यात्मिको वा।

व्यवहारिकपूजने उपचाराणां च यन्त्राणां चक्राणां मन्त्रादीनां च समावेश: प्राप्यते। द्वितीयप्रकारके पूजने सर्वासां देवीनां मूलं एकमेव स्वीक्रियते। काली भुवनेश्वरी बगला-भैरवी-छिन्नमस्तान्नपूर्णा सरस्वती लक्ष्म्यादय: सर्वा: पराप्रकृतेरेव विभूतय: सन्ति।[3] तन्त्राणां दार्शनिके परिवेशे सगुणात् परमेश्वरात् यश्च सच्चिदानन्दविभव: कथ्यते–"शक्त्युद्भवो भवति शक्तेर्नादस्य (परस्य) उत्पत्तिर्भवति नादात् बिन्दो: (परस्य) तथा चायं बिन्दु:

त्रिधाविभक्तोऽस्ति। (१) बिन्दुः (अपरः) (२) नादः (अपरः) (३) बीजम्। एतेषु बिन्दुः शिवस्वरूपमस्ति, बीजं शक्तिरस्ति तथा च नादः शिवशक्तेः समार सताया द्योतकोऽस्ति। बीजमेव सृष्टेर्मूलमस्ति तथा च तत शब्दब्रह्मास्ति।[१] तदेव पराशक्तिः परदेवता चास्ति।[२] इयमेव शक्तिराधारचक्रे कुण्डलिन्याः स्वरूपं धारयति। तथा च सा आदिक्षान्त पश्चाद्वर्णमयस्तिं इयमेव मातृकारूपे साधकयोगिनोऽन्तःकरणे अभिव्यज्यते। इत्थं शक्तेर्मूलस्वरूपं वयं कुण्डलिनी कथयितुं शक्नुमः। अत्र पञ्चमकाराणां व्याख्यापि दार्शनिकी संजाता। तन्त्रयोगे कुण्डलिन्याः षट्चक्रभेदनं कृत्वा सहस्रारे परशिवेन सह संगमने साधनायश्चरमावस्थास्ति। षट्चक्र-भेदनस्य क्रमे चमत्काराणामपि कल्पनाकृता। षट्चक्राणामुपरि स्थितात् सहस्रसारादजस्ररूपेण क्षरन्ती माध्वीधारेव मद्यमस्ति तस्य पानं चिच्छक्त्या (कुण्डलिन्या) करणमेव मद्यपानमस्ति।[३] ज्ञानखड्गेन हतैः सर्वैः पुण्यापुण्यकर्मभिः युक्तस्य चित्तस्य परादेवतायां विलीनीभावः मांसभक्षणमस्ति।[४] सर्वेषामिन्द्रियाणां निग्रहं विधाय आत्माभिमुखीकरणमेव मत्स्यभक्षणमस्ति।[५] अप्रबुद्धां कुण्डलिनीशक्तिमुद्बोध्य तस्या; शक्तेः सहस्रारस्थपरशिवेन समागमनमेव मैथुनमस्ति।[६] आशातृष्णाभयघृणामानलज्जाकोपजुगुप्साः मुद्रा द्रष्टव्य मत्वा ब्रह्मज्ञानाग्नो भर्जनं कृत्वा विनाशकरणं मुद्रासेवनमस्ति।[७]

इत्थं मध्यकालिकाः तन्त्रसंग्रहकाराः टीकाकाराश्च शक्तिपूजनं दिव्यरूपे वर्णयामासुः। यच्च शाक्तसम्प्रदायस्य चरमोत्कर्षं परिचाययति।

अनेन प्रकारेण देवीपूजनस्य प्राचीनतमं स्वरूपं यस्मिन् मद्यमांसादिभिः सह पूजनस्य विधानमासीत्। तत् दार्शनिकं स्वरूपं प्रदाय तस्य महत्तायाः ख्यापनं कृतम्।

**महाकाली एव च कालः**–महाकाली महाकालस्याधिष्ठात्री शक्तिरस्ति। अतः कालीतत्त्वविवेचनस्य प्रमुख आधारः कालस्वरूपविवेचने निहितोऽस्ति। भारतीय-शास्त्रपरम्परानुसारं कालस्वरूपं त्रिधा विभज्य विवेचनं कर्त्तुं शक्यते–

१. कालः–एकः पृथक् तत्त्वरूपेण।

२. कालः-सृष्टेराधाररूपेण।।

३. कालः–सर्वेश्वरस्य अखण्डब्रह्मणो वा रूपेण एषां परिचयः क्रमेण दीयते–

**सामान्यतया तु कालः समयस्य वाचकोऽस्ति।[१]**

वैशेषिकसूत्रे (२/२/६-९) तथा च चरकसंहितायां (१/४८०) स्थले कालो द्रव्यरूपेण स्वीक्रियते। जैनदर्शनेऽपि कालः पदार्थरूपेण स्वीक्रियते। अमुं कालं तत्वं मान्याः कात्यायनमहोदयाः स्वकीये वार्तिके इत्थं विशदीकुर्वन्ति–जनैः स कालः कथ्यते येन कठोरवस्तूनां वृद्धिः क्षयश्च भवति। स एव कालः भविष्येऽपि उत्पत्तिं चकार कालादेव ऋजुः, सामानि यजूंष्यपि प्रादुर्बभूवुः। इहलोकः, परमलोकः, पुण्यलोकः, पुण्य विधृतयश्च एतान् सर्वान् लोकान् ब्रह्मणो विजित्य कालः परमदेव इव संचरन्नस्ति।[२]

कूर्मपुराणानुसारं[३] इयं कालः पूजनीयः, अनन्तः, अजरः, अमरश्चास्ति। सर्वगतत्येन, सर्वतन्त्रस्वतन्त्रत्वेन सर्वात्मकत्वेन च परमेश्वरोऽस्ति। ब्रह्माविष्णुमहेशादय अनेके देवाः समिताः किन्तु भगवान् कालः एक एवामितोऽस्ति। सर्वे देवाः कालादेव जायन्ते कालइत्येवब्रह्म नारायणः, ईशः, (शिवः) प्राकृतं प्राप्नुवन्ति पुनश्च कालस्यैव योगेन प्रादुर्भवन्ति। अनेनैव परब्रह्मणो वासुदेवस्य शंकरस्य व सृष्टिर्भवति। अतो निश्चीयते यदि विश्वं कालात्मकमसित स च केवलं एकमात्रं परमेश्वरोऽस्ति।[१] काल एव जीवानां सर्जनं संहरणं च करोति। सर्वे कालवशाः सन्ति। कालः कस्यापि वशीभूतो नास्ति।[२] श्वेताश्वतरोपनिषदि कालशब्दः सृष्टिः कारणरूपे वर्णितो

विद्यते।[३] कालस्येवाशक्तो न कोऽप्यंकुशोऽस्ति जननमरणादिरपि तस्मिन्नेव चक्रे नियमितो भवति।

**अव्याहताः[४] कला यस्य कालशक्तिमुपाश्रिताः।**

**जन्मादयो विकाराः षड्भावभेदस्ययोनयः।।**

रात्रिर्दिने च कथ्यते। यदा स क्रियायुक्तो भवति[५]। तत्र भगवन्तः पतंजलयोऽपि कालं समयरूपेण साकं पृथक् पदार्थं स्वीकुर्वन्ति।[६]

इत्थं कालः समयो वा सृष्टो पृथक्रूपेण सत्तावान् महत्त्वपूर्ण-तत्त्वरूपेण स्वीकृतः।

अस्य कालस्य कालत्वशक्तिः महाकाल्यस्ति। सा कालस्यापि कालोऽस्ति।[७] तथा सैव कालस्वरूपाप्यस्ति।[८] महाप्रलयावस्थायाः शून्यावस्थायां भगवत्याः तारायाः साम्राज्यं भवति। इमां च शून्यावस्थां महाशून्यरूपा माता दक्षिणाकालिकव्याप्नोति।[१] जगतः संहारकाले अखण्डकालस्य साम्रारयाः भगवत्याः कालिकाया एव सत्ता सर्वत्रैव प्रसरीसरीति।

एवं प्रकारेण ।कालस्य काल्या साकं अविनाभावः संबन्धोऽस्ति। लौकिकोपासनायां कालस्य महाकालस्य वा शिवशङ्करस्य दैवीकृत्य महाकाल्या सह सम्बद्धः क्रियते।

अनेन प्रकारेण कालस्वरूपस्यावधारणानन्तरम् काल्याः स्वरूपाख्याने सौकर्यं स्यात्।

**काल्या (तात्त्विकं) स्वरूपम्**—पूर्वोक्तासु पंक्तिषु कालः सर्वात्मकतत्त्वरूपेणवर्णितः। तथाचैवं कथितं यत् कातलत्त्वस्य शक्तेर्वा अभिधानं काल्यस्ति।[२] शाक्तोपनिषत्सु अस्याः दार्शनिकस्वरूपस्य सुन्दरं निदर्शनं परिदृश्यते। आदौ न दिनमासीन्नवा रात्रिरेव न सदासीन्नासद्वा अपितु केवलं भगवत्याः गुह्यकाल्या; प्रज्ञाः प्रसार आसीत्।[३] अस्याः स्वरूपं दृश्यं नास्ति केवलं हृदयेन चिन्त्यमस्ति।[४] यतो हि सा समस्तप्राणि स्वरूपास्ति सर्वे तस्या एवं विग्रहस्यांशभूताः सन्ति तथा च सा सर्वगतास्ति।[५] काल्येव अग्निः, सूर्यः, वायुः, चन्द्रमाः, शुक्रः, ब्रह्म, आपः, प्रजापतिश्चास्ति। सा नार्यपि पुरुषोऽपि, कुमारोप्यस्ति कुमार्यपि।[६] भगवत्याः काल्याः न किमपि कार्यं न च कारणमस्ति। जगति कोऽपि तत् समा तत्तुल्यो वा शक्तिशाली नास्ति। अपितु अस्याः पराशक्तिः प्राकृतिकज्ञानस्य, शक्तेः, क्रियायाश्च रूपे विविधप्रकारेण व्यज्यते।[१] महाकाली पूर्णस्वतन्त्रास्ति। न कश्चित् तस्याः स्वामी सा कारणस्यापि कारणमस्ति।[२]

निर्वाणतन्त्रानुसारेण ब्रह्मविष्णुरुद्राणामुत्पत्तिः महाकाल्या भवति।[३] गुह्यकाली सांख्यस्य अव्यक्तादपि परा विद्यते परमगूढ़ा चास्ति—

इन्द्रियेभ्यः पराह्यर्था ह्यर्थेभ्यश्च परं मनः।

मनसस्तु पराबुद्धिर्बुद्धैरात्मा महान् परः।।

महतः परमव्यक्तमव्यक्तात् पुरुषः परः।।

पुरुषात्तु परा देवी सा काष्ठा सा परा गतिः।।

(गुह्य० का०उ० ४१-४२)

अतएवैवं सा देवानामुत्पादयित्री कथ्यते।[४] तन्त्रयोगे इयमेव (श्रीदक्षिणाकाली) महाकुण्डलिनी कथिता।[५]'कालिकोपनिषदि अस्याः स्पष्ट उल्लेखोऽस्ति—

अथ हौनां ब्रह्मरन्ध्रे ब्रह्मरूपिणीमाप्नोति' इत्यादि।

निर्वाणतन्त्रस्य षष्ठे पटले सहस्रारे भ्रद्रकालिकाया निवासो निर्दृश्यते। तन्त्रदर्शने मणिद्वीपस्य

कल्पनाप्यद्वितीयायास्ति। श्रीविपामणि द्वीपवासिनी कथिता। निर्वाणतन्त्रे आद्यां कालीं मणिद्वीपवासिनीं निम्नशब्देषु वर्णयति–

**पद्ममध्ये बीजकोषे भुवनानि चतुर्दश।**
**स्थानं बहुविधाकारं सर्वदेवस्य चाश्रयम्।।**
**तन्मध्ये सत्यलोकं महारुद्रस्य कारणम्।**
**दशकास्तेन सवर्गेण निर्मितं चक्रपाणिना।।**
**दिक्षु तोयमण्डलं च यथा पूर्णेन्दुमण्डलम्।**
**परितः पारिजातानि यन्मध्ये कल्पतरुः पुनः।।**
**कल्पवृक्षस्य निकटे ज्योतिर्मण्डलमुत्तमम्।**
**उद्यदादित्यसंकाशं चतुर्द्वारं–विभूषितम्।।**
**गन्धवायुसमायुक्तं गन्धधूपैरलंकृतम्।।**
**तन्मध्ये वेदिका देवी रत्नसिंहासनं प्रिये।।**
**महाकाली परत्मात्मा चणकाकाररूपतः।**
**माययाच्छादितात्मानं महाविष्णुः स एव हि।।**
**महाब्रह्मा स एवात्मा नाममात्रविभेदतः।**
**एकमूर्त्तित्रयं नाम ब्रह्मविष्णुमहेश्वराः।।**
निर्वा० १०-३२१-८

उपर्युक्तं वर्णनं श्रीविद्यायां मणिद्वीपवर्णनाद्भिन्नमस्ति। सहैव च निर्वाणतन्त्रं भगवतीं कालीं सर्वकारणभूतां साम्राज्ञीस्वरूपां प्रतिपादयति।

व्यक्ते जगति महाकाल्याश्चिंतनं येन रूपेण क्रियते तद्वयं तस्याः ध्यानेषु प्राप्नुमः।[१] कज्जलपर्वतेन समः तस्या वर्णाऽस्ति, सा विकरालमुखी शिवा चास्ति, तस्याः स्कन्धयोः मुण्डमाला विकीर्णा वर्तते सा विकीरर्णकेशा स्मितमुखी चास्ति, महाकालस्य हृदये स्थिता समासीना चास्ति, तस्याः पयोधरावुन्नतै स्तः, शिवेन सह सा विपरीतरतौ संलग्नाऽस्ति, विकरालदंष्ट्रा चास्ति, सा नागस्य यज्ञोपवीतं, भाले च चन्द्रखण्डं धारयति। सर्वैरलंकारैर्युक्ता मुण्डमालाविभूषिता चास्ति। सहस्रसकाराणां कांचीं धारयति। नग्ना चास्ति, सहस्रकोटिशिवासु योगिनीषु च विराजमानास्ति, तथा च मुखं रक्तपूर्णमस्ति, कृतमद्यपाना चास्ति अग्निः सूर्यश्चन्द्रश्च तस्या नेत्राणि सन्ति, तथा च वदनेर्वह्निरूपी बिन्दुरस्ति। मृतकिशोरौ कर्णावतंसत्वेन धारयति। कुण्डमालातोऽपि रुधिरं क्षरतिं श्मशानाग्निमध्ये विराजमानास्ति ब्रह्मविष्णुभ्यां वन्दिता चास्ति। सद्यश्छिन्नशिरः खड्गं, वराभये च दद्याति। वामभागस्योपरि हस्ते खड्गं, तदधश्च शिरः, दक्षभागस्योर्ध्वहस्ते वरमुद्रां तदधश्च करे अभयमुद्रां धारयति।

**काल्याः भेदोपभेदाः**–कालिका सर्वात्मिका शक्तिः स्वीकरणीया या च तत्स्वरूपवर्णनेनैव स्पष्टतमास्ति। तथापि काल्याः स्वपत्याधारेण कालभेदेन चानेके भेदा अपि शास्त्रैः प्रदर्शिता। इमे भेदाः पारमार्थिका न सन्ति–अपितु मात्रमौपचारिकाः। तात्पर्यमिदं यदेते तत्त्वस्य अनेकान्यभिधनानि कथयितुं शक्यते।

महाकाल्याः प्रसिद्धतमं नाम दक्षिणाकालीति। यथा मूलमातृकायाः प्रधानध्यानस्य द्वितीयस्यां पंक्तौ समुल्लेखो वर्वते यथा–कालिका दक्षिणो दिव्यामित्यादि। अस्मिन् दक्षिणापदस्य संयोजनस्य नैकानि कारणानि

निर्वचनव्याजेन कथितानि।[१] यथा–

(१) रवेः सुतः शनैश्चरः दक्षिणस्यां दिशि विराजते। स च कालीनामोच्चारणेन भीतियुक्तो भूत्वा समन्ततः पलायेत्। अतोहि काल्या अभिधानं दक्षिणाकालीति विख्यातं त्रिषु लोकेषु।

(२) पुरुषस्य भागः दक्षिणो वामायाश्च वामभागोऽस्ति। एषा काली वामा सती दक्षिणं पुरुषं जयति, तस्माद् दक्षिणाकाली नाम।

(३) निर्गुणः पुरुषो ब्रह्मेत्यर्थः, भगवतया काल्या सृज्यते संह्रियते च एतस्माद्दाक्षिण्यात् दक्षिणाकाली नामेति।

दक्षिणाकाल्या एतानि निर्वचनान्यपि तस्याः सर्वात्मकत्वस्य परिचायकानि सन्ति। शक्तिसंगमस्यानुसारं काली विद्याक्रमेण त्रिषु दिक्षुसु च विभागेषूपासितास्ति।[२] अस्याः त्रीणि स्वरूपाणि काली, तारा, छिन्नमस्तानां सन्ति। तथा दशस्वरूपेण सर्वामहाविद्याः स्वीकृताः। क्वचित् क्वचित् महाकाल्येव कादिक्रमस्य हादिक्रमस्य चाधिष्ठात्रिरूपेण वर्णिता।[३] एतदतिरिक्तं विभिन्नतन्त्रेषु काल्या विभिन्नभेदानां वर्णनमाप्नोति। पुरश्चर्यार्णवे काल्या ९ भेदा वर्तन्तें[४] तद्यथा–

१. दक्षिणकाली २. भद्रा ३. श्मशाना ४. कालकाली ५. गुह्यकाली ६. कामकलाकाली ७. घनाकाली ८. सिद्धिकाली ९. चण्डी।

जयद्रथयामले–१. डम्बरकाली २. गहनेश्वरी ३. एकतारा ४. चण्डशावरी ५. वज्रवती ६. रक्षाकाली ७. इन्दवरी काली ८. धनदा ९. रेमण्या १०. ईशान काली ११. मन्त्रमाला।

एते एकादशभेदाः वर्णनं प्राप्नुवन्ति। सम्मोहनतन्त्रे तु–१. स्पर्शमणिः २. चिन्तामणिः ३. सिद्धकाली ४. विद्याराज्ञी ५. कामकला ६. हंसकाली ७. गुह्यकाली अमी सप्तभेदाः वर्णनं प्राप्नुवन्ति।[१]

लुप्तागमसंग्रहे कस्यचित् तन्त्रराजतन्त्रस्यानुसारं काल्याः त्रयोदशभेदाः[२] सन्ति। यथा–

**सृष्टिकाली च संहारे सृष्टो सा परमेश्वरी।**
**स्थितिकाली तथा घोरा ततः संहारकालिका।।**
**रक्तकाली चर्वयन्ती रक्तौघुमविभेदतः।**
**सुकाली यमकाली च मृत्युकाली भयावहा।।**
**भद्रकाली तथा चान्या परमादित्यकालिका।**
**मार्तण्डकाली कालाग्निरुद्रकाल महोल्ल्वणा।।**
**महाकालकुले काली महाभैरवकालिका।**
**त्रयोदशविधाकाली विज्ञेया नामभेदः।।**

पंचशतिका श्रीक्रमस्तोत्रे च उपर्युक्तेषु कालिभेदेषु द्वादशानामेव स्व-रूपाणि वर्णितानि।)[३] यथा–

(१) सृष्टिकाली–

**मन्त्रोदया व्योमरूपा व्योमस्था व्योमवर्जिता।**
**सर्वासर्वविनिर्मुक्ता विश्वस्मिन् सृष्टिनाशिनी।।**
**या काली विश्वविभवा सृष्ट्यर्थकारणक्षमा।**
**यदन्तः शान्तिमायाति सृष्टिकालीति सा स्मृता।।**

तथैव श्रीक्रम–

**कौलार्णवानन्दघनौर्मिरूपामुन्मेषमेषोभयभाजमन्तः।**
**निलीयते नीलकुलालये या तां सृष्टिकालीं सततं नमामि।।**

(२) रक्तकाली–

**न चैषा चक्षुषा ग्राह्या न च सर्वेन्द्रियस्थिता।**
**निर्गुणानिरहंकारा रंजयेद्विश्वमण्डलम्।।**
**सा कला तु यदुत्पन्ना सा ज्ञेया रक्तकालिका।।**

तथैव श्रीक्रमे–

**महाविनोदार्पितमातृचक्रवीरेन्द्रकासृग्रसपानसक्ताम्।**
**रक्तीकृतां च प्रलयात्यये तां नमामि विश्वाकृतिरक्तकालीम्।।**

अत: परं संहारकालीमुभयत्र। तत्र श्रीक्रमस्तोत्रे–स्तौति–

**वाजिद्वयस्वीकृतवातचक्रप्रक्रान्तसंघट्टमागमस्थाम्।**
**शुचिर्ययास्तंगमितोऽर्चिषा तां शान्तां नमामि स्थितिनाशकालीम्।।**

श्रीपंचशतिकेऽपि–

**हासिनी पौद्गलीयेयं बालाग्रशतकल्पना।**
**कल्पते सर्वदेहस्था स्थितिः सर्गस्य कारिणी।।**
**यदुत्पन्ना तु सा देवी पुनस्तत्रैव लीयते।**
**तां विद्धि देवदेवेश स्थितिकालीं महेश्वर।।**

३. यमकाली–पञ्चशतिके–

**यमस्वरूपरूपस्था रूपातीतस्वरूपगा।**
**सा कला लीयते यस्यां यमकाली तु सा स्मृता।।**

श्रीक्रमस्तोत्रे–

**सर्वार्थसंकर्षणसंयमस्य यमस्य यन्तुर्जगतो यमाय।।**
**वपुर्महाग्रासविलासरागात् संकर्षयन्तीं प्रणमामि कालीम्।।**

(४) चण्डकाली–पंचशतिके–

**चण्डकाली शुद्धवर्णा यामृतग्रसनोद्यता।**
**भावाभावविनिर्मुक्ता विश्वसंहाररूपिणी।।**
**यत्र सा याति विलयं सा च संहारकालिका।।**

श्रीक्रमस्तोत्रेऽपि–

**उन्मन्यनन्ता निखितार्थगीर्भा या भावसंहारनिमेषमेति।।**
**सदोदिता सत्युदयाय शून्यां संहारकालीं मुदितां नमामि।।**

(५) मृत्युकाली–श्रीपंचशतिके–

**ओमित्येषा कुलेशानी मृत्युकालान्तपातिनी।**

मृत्युकालकला यस्याः प्रविशेद्विग्रहं शिव।।
तदा सा मृत्युकालीति ज्ञेया गिरिसुताधव।।
श्रीक्रमस्तोत्रे यथा–
ममेत्यहंकारकलाकलापविस्फारहर्षोद्धतगर्वमृत्युः।
ग्रस्तो यया घस्मर संविदं तां नमाम्यकालोदितमृत्युकालीम्।।
(६) रुद्रकाली–श्रीपंचशतिके–
गमागमसुगम्यस्था महाबोधावलोकिनी।
मायामलविनिर्मुक्ता विज्ञानामृतनन्दिनी।।
सर्वलोकस्य कल्याणि सदा रुद्रसुखप्रदा।
यत्रैव शाम्यति कला रुद्रकालीति सा स्मृता।।
भेदस्य द्रावणाद्भद्रा भद्रसिद्धिकरीति या।।
श्रीक्रमस्तोत्रेऽपि–
विश्वं महाकल्पविरामकल्पभवान्तभीमभ्रुकुटिभ्रमंत्या।
याश्नात्यनन्तप्रभवार्चिष तां नमामि भद्रां शुभभद्रकालीम्।।
क्रमसद्भावभट्टारकेऽपि–
इदं सर्वमसर्वं यत्संहारान्तं तु नित्यशः।
कुटिलेक्षणरेखव यत्।।
ततो बोधरसाविष्टा स्पन्दमाना निराकुला।।
दीधितीनां सहस्रं यद्वमेच्च पिबते भृशम्।।
सा कला लीयते यस्यां रुद्रकालीति सा स्मृता।
(७). मार्तण्डकाली–श्रीक्रमस्तोत्रे–
मार्तण्डमापीतपतङ्गचक्रं पतङ्गवत्कालकलेन्धनया।?
करोति या विश्वसरसान्तकां तां मार्तण्डकालीं सततं प्रणौमि।
श्रीपञ्चशतिके च–
शब्दब्रह्मपदातीता षट्त्रिंशान्तनवान्तगा।
ब्रह्माण्डखण्डातुत्तीर्णां मार्तण्डमूर्तिख्यया।
सा कला लीयते यस्यां मार्तण्डी कालिकोच्यते।।
(८) परमार्ककाली-क्रमस्तोत्रे–
अस्तोदितद्वादशभानुभाजि यस्यां गता मर्मशिखे शिवेव।
प्रशान्तधाम्नि द्युतिनाशमेति तां नौम्यनन्तां परमार्ककालीम्।।
श्रीपञ्चशतिकेऽपि–
एकाकिनी चैकवीरा सुसूक्ष्मा सूक्ष्मवर्जिता।।
परमात्मपदावस्था परा परस्वरूपिणी।।

**सा कला पररूपेण यत्र संलीयते शिव।**
**सा कला परमार्केति ज्ञेया भस्मांगभूषण।।**
कालाग्नि रुद्रकाली श्रीपंचशतिके–
**वरदा विश्वरूपा च गुणातीता परा कला।**
**अघोषा सा स्वरा रावा कालाग्निग्रसनोद्यता।।**
**निरामया निराकारा यस्यां सा शाम्यति स्फुटम्।**
**कालाग्निरुद्रकालीति सा ज्ञेयामरवन्दिता।।**
श्रीक्रमस्तोत्रे च–
**कालक्रमाक्रान्तदिनेशचक्रक्रोडीकृतान्ताग्निकलाप उग्रः।**
**कालाग्नि रुद्रा लयमेति यस्या तां नौमि कालानलरुद्रकालीम्।।**
(९) कालकाली–श्रीक्रमस्तोत्रे–
**नक्तं महाभूतलये श्मशाने दिक्खेचरी चक्रगणेन साकम्।**
**कालीं महाकालमलं ग्रसन्तीं वन्दे ह्यचिन्त्यामनिलानलाभाम्।।**
स एव श्रीपंचशतिके–
**ऋतोज्वला महादीप्ता सूर्यकोटि-समप्रभा।**
**कलाकलङ्करहिता कालस्य कलनोद्यता।।**
(१०) घोरकाली-श्रीपंचशतिके–
**दशसप्तविसर्गस्था महाभैरवभीषणा।**
**संहरेद् भैरवान् सर्वान् विश्वं च सुरपूजिता।।**
**सान्ताः शाम्यति यस्यां च सा स्याद् भरित भैरवी।**
**महाभैरवचण्डोग्रहघोरकाली परा च सा।।**
स एव श्रीक्रमस्तोत्रे–
**क्रमत्रयत्वाष्टमरीचिचक्रसंचार चातुर्यतुरीयसत्ताम्।**
**वन्दे महाभैरवघोरचण्डकालीं कलाकाशशशांककान्तिम्।।**
**इत्थं द्वादशधाकालीकल्पिता तन्त्रेषु।**

◆

**सन्दर्भाः**

१. आ०र०भा० २, श्लोक ४०६-४०९
२. आ०र०भा० २, श्लोक ४०८ वामाचारेण च तथा सिद्धिदा भवति ध्रुवं
३. आ०र०भा० २, श्लोक ४/२४-२९ तथा च पुरश्चर्यार्णव–भाग-३
४. ब्र०पु० १८१/४८-५२
५. महानि० १/५७

६. महानि० तन्त्र ४/१०-१४

७. शारदाति० १/५६

८. तत्रैव १/५२-५७

९. लिंगत्रयविशेषज्ञ: षडाधारविभेदक:, पीठित्थानिचागत्यमहायज्ञवनंद्रष्टव्यश्रयेत् आमूलाधार-ब्रह्मरन्ध्रं गत्वागत्वा पुन: पुन: चिच्चन्द्रकुण्डलीशक्तिमुद्रयास्सुखाशय:। व्योमपंकजनिस्पन्दसुधापानरतो भवेत् मधुपानमिदं प्रोक्तमितरे मद्यपायिन:।। –मेरुतन्त्र कौलिकाचार प्रकाश: श्लोक–१२१-३

१०. पुण्यापुण्ये उभेभिधित्त्वा ज्ञानखड्गेन योगवित्।
परलयेत् सदाचित्तं पलाशी सनिगद्यते।। तत्रैव–१२४ श्लोक

११. मनसास्वेन्द्रियगणान्नियम्यात्मनियोजयेत्।।
मत्स्याशी वचन: प्रोक्त: शोषा धीवरवृत्तय:।। तत्रैव १२५ श्लोक

१२. अप्रबुद्धातु या शक्ति: प्रबुद्धाकौलिकस्य च।
शक्ति तां सेवयेद्यस्तु संभवेत्च्छक्तिसेवक:।। तत्रैव–१२६ श्लोक

१३. आशातृष्णाभयविषादघृणामानलज्जाप्रकोपा:।
ब्रह्माग्नावष्टमुद्रा: पर सुकृति जन: पच्यमाना: समन्तात्।।
नित्यसंभक्षयेत्तानवहितमनसा दिव्यभावानुरागी।
योऽसौ ब्रह्माण्डभाण्डे पशुहति विमुखो रुद्रतुल्यो महात्मा।–शक्त्यंक (कल्याण) पृ०- २५५

१४. शत०ब्रा० १/७/३/३, २/४/२/४ स्थले कालशब्द: समयस्य–अथवा उचितसमयस्य वाचकोऽस्ति।
ऋ० १०/४२/९- स्थले अयं शब्द: उचितसमयस्य वाचकोऽस्ति।
वृ०उप० १/२/४- अत्रायं शब्द: निश्चितसमयार्थकोऽस्ति।

१५. अथर्व० १९/५४-१-५

१६. कूर्मपु०-१/५ अध्या० (१/७२/१-७)

१७. इयमेव वार्त्ता विष्णुधर्मोत्तरे भिन्नरूपेण वर्तते।

१८. वायुपुराणे–२१रु २९-३०, कूर्म० २/२/१६

१९. किं कारणं ब्रह्म। कुत: स्म जाता जीवाम केन क्व च संप्रतिष्ठा:।
काल: स्वभावो नियतिं यदृच्छभूतानि योनि: पुरूष इति चिन्त्यम्।।-श्वेता० १/१-२

२०. शक्त्यङ्क (कल्याण) पृ० ५३२, कालीतत्त्वशीर्षके लेखे वाक्यपदीयस्योद्धरुणम्

२१. द्रष्टव्य: २/२/५ "काला: परिणामिना" इति पाणिनीयसूत्रे द्वि०पा०

२२. पा०सू० ३/३/१६७- भाष्यं द्रष्टव्यम्।

२३. कलनात् सर्वभूतानां महाकाल: प्रकीर्तित:। महाकालस्य कलनात् त्वभाषा कालिकापरा।।
काल संग्रसनात् काली सर्वेषामादिरूपिणी। कालत्वादादिभूतत्वादाद्याकालीति गीयते।। महानि० ४/३१-२

२४. यामाद्यां प्रकृतिं प्राहु: कालीं कालस्वरूपिणीम्" वृहन्नीलतन्त्र १३/३

२५. महाप्रलयके जाते तत: शून्यं भविष्यति।। ब्रह्मरूपा परानन्दा केवला तारिणी परा।।
सर्व तस्यां तु संलीनं तद्रूपं सर्वमेव तु।। ततं देवि महाशून्ये महादक्षिणकालिका।
व्याप्य तिष्ठति देवेशि शून्यं कृष्ण–स्वरूपकम्। –शक्ति सं० तारा० खं० २/४०-२

२६. तामाश्रित्य महायोगी संहरत्यखिलं जगत्।। निर्वाणतन्त्र १/२६ उत्तरा०

२७. गुह्यकाल्युपनिषद्–श्लोक-६१

२८. न संदृशो तिष्ठति रूपमस्या:। न चक्षुषा पश्यति कश्चिदेनाम्।।
हृदामनीषां मनाभिक्लृप्ताम्। य एनां विदुरामृतास्ते भवन्ति।।–तत्रैव श्लो० ६३

२९. सर्वाननशिरोग्रीवासर्वभूतागुहाशया। सर्वत्रस्था भगवती तस्मात् सर्वगता शिवा।। –तत्रैव श्लेक–४७

३०. सा चैवाग्निः सा च सूर्यः सा वायुः सा च चन्द्रमाः।
सा चैव शुक्रः सा ब्रह्म सा चापः सा प्रजापतिः।।
सा चैव स्त्री पुमान् सा कुमारः कुमारिका।। गुह्यका० उ० श्लोक–५२

३१. तस्या न कार्य कारणं च विद्यते न तत् समा चाप्यधिका च दृश्यते।
परास्य शक्तिर्विविधैव श्रूयते। स्वाभाविकी ज्ञानबलक्रिया च।।–तत्रैव श्लोक–६७

३२. तत्रैव श्लोक–६८

३३. निर्वा०-पटल-१०

३४. द्रष्ट० गुह्यका०उ० ५६-''या देवानां प्रभवा चोद्भवा च''

३५. द्रष्टव्य–कल्याण, उपासनांके ३९६ पृ०

३६. श्यामारहस्ये (परि० ३, पृ० ५९) उद्धृत स्वतन्त्रतन्त्रस्य ध्यानम्।

३७. काली तन्त्रं–पृ०-१५ भाष्ये

३८. शक्तिसंग० भा० ४, पृ०-६५ भूमिकायाम्।

३९. कल्याण उपासना इ०कः ४१० पृ०

४०. योगतन्त्रविमर्शिनी –''कालीविद्या कालीशक्तिश्च''

४१. तत्रैव–यद्यपि अस्मिन् स्थले दशनामोल्लेखस्य प्रतिज्ञा प्रतिज्ञा कृता। तथापि सप्तनामनामेवाल्लेखोऽभूत्।

४२. लुप्तागमसंग्रहः–पृ०- १५

४३. तन्त्रविमर्शिनी–''काली विद्या काली शक्तिश्च'' पृ०-४४-४७

◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAṀ
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 106-109

# श्रीमद्भगवद्गीतायां बुद्धिपदविमर्शः सशाङ्करभाष्यम्

डॉ. गीता शुक्ला*

**बुद्ध्या विशुद्धयाभाव्यम् किमन्यैर्द्वन्द्वकष्टदैः।**
**या स्वयं पद्मनाभस्य नाभिपद्मसुवासिता।।**

'बुद्धिर्यस्य बलं तस्य', 'दीर्घौबुद्धिमतोबाहू', 'बुद्धिमूलंतु विजयम्' इत्यादयः सूक्तयः बुद्धेरेव महत्त्वं कथयन्ति। बुद्धिः भगवत्याः आदिशक्तेः एकं रूपमस्ति-या देवी सर्वभूतेषु बुद्धिरूपेण संस्थिता[१] बुद्धिरेव शरीररथे सारथीभूय एकतो रथिनामात्मानम् अनुवदति संवदति परिचाययति च। अपरतश्च मनः प्रग्रहमाध्यमेन इन्द्रियाश्वान् संयमयति।[२] 'बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च' इति श्रुतिरूपकं प्रचलितमेव। बुद्धिरेव अध्यवसायधर्मेण आत्मनोऽस्मितां प्रतिनिधीयमाना जाग्रतस्वप्नसुषुप्त्यादिषु अवस्थासु चैतन्यं प्रत्यक्चैतन्यञ्च आधिभौतिक-आधिदैविक-आध्यात्मिकरूपेण च आत्मनो नित्यशुद्ध-बुद्ध-मुक्त-सत्यस्वभावसमम् अस्य सच्चिदानन्द-अनन्त-अद्वयम् अखण्डम् अपरिच्छिन्नत्वञ्चापि अनुभावयति। तिर्यग्योनिष्वपि बुद्धिरेव बलाबलं निर्धारयति-बुद्धिर्यस्य बलं तस्य इति कथा सर्वे जानन्त्येव।

सांख्यदर्शने प्रकृतिरूपोपादानात् महान् (महत्तत्त्वम्) अर्थात् बुद्धितत्त्वम् उत्पद्यते। तस्मादहंकारः, अहङ्काराच्च पञ्चतन्मात्राः एकादशेन्द्रियाणि च प्रभवन्ति। तन्मात्रेभ्यः च पञ्चमहाभूतानि उत्पद्यन्ते।

एवं सांख्यदर्शने बुद्धितत्त्वस्य महती भूमिका अस्ति अतएव तत्[३] 'महान्' इत्युच्यते।

अध्यवसायो बुद्धि[४] निश्चयात्मिकान्तःकरणवृत्तिर्बुद्धिः[५]।

इति दृष्ट्या अध्यवसायः अर्थात् निश्चयकारकं तत्त्वं बुद्धिः।

बुद्धेर्लक्षणमिदं बुद्धिं सजातीयेभ्यो (अहंकारादिभ्यो) विजातीयेभ्यः (घटपटादिभ्यः) च विविनक्ति[६]

न्यायशास्त्रे बुद्धिशब्दस्यार्थे 'भोगः' इति पदस्य प्रयोगो दृश्यते[७]

भोगकार्यं बुद्ध्यैव सम्भवति इति नैयायिकानां मतम्। कार्यकारणयोरभेदत्त्वारोपात् कार्यं (भोग) एव कारणत्वेन (बुद्धित्वेन) अत्र निर्दिष्टः।

**वेदान्तानामशेषाणामादिमध्यावसानतः।**
**ब्रह्मात्मन्येव तात्पर्यमिति धीः श्रवणं भवेत्।।**[८]

अत्र श्रवणशब्दो बुद्धिवाचकः अस्ति।

श्रीमद्भगवद्गीतायामपि 'मनसस्तु परा बुद्धिः इत्युक्त्वा बुद्धेर्महत्त्वं वाभिहितम्।

---

* एसो.प्रो. संस्कृत विभाग, भ.दी.आ.क. स्नातकोत्तर महाविद्यालय, लखीमपुर-खीरी.

पुराणे बुद्धेः स्वरूपम्-बुद्धिर्विवेचनारूपा सा ज्ञानजननीश्रुतौ।[९]

**अध्यात्मं बुद्धिरित्याहुः षडिन्द्रियविचारिणी।**
**अधिभूतञ्च मन्तव्यं ब्रह्मा तत्राधिदैवतम्।।**[१०]

महाभारते बुद्ध्याः पञ्चगुणाः वर्णिताः—

**इष्टानिष्ट विपत्तिश्च व्यवसायः समाधिता।**
**संशयः प्रतिपत्तिश्च बुद्धे पञ्चगुणान् विदुः।।**[११]

बुद्धयाः पर्यायाः सन्ति—

मनीषा, धिषणा, धीः, प्रज्ञा, शेमुषी, मतिः, प्रेक्षा, उपलब्धिः, चित्, संवित् प्रतिपत् ज्ञप्तिः चेतना, चेति शब्दाः, बुद्धेरेव सहजाः पर्यायाः।[१२]

अत्र श्रीमद्भगवद्गीतायां बुद्धिपदविमर्शः क्रियते। शांकरभाष्यमपि दीयते।

- एषा तेऽभिहिता सांख्ये बुद्धिर्योगे त्विमां शृणु।
  बुद्ध्या युक्तो यया पार्थ, कर्मबन्धं प्रहास्यसि।।[१३]
  शंकरभाष्ये- साक्षात् शोकमोहादिसंसारहेतुदोषनिवृत्तिकारणम्।
- व्यवसायात्मिका बुद्धिः समाधौ न विधीयते।[१४]
  व्यवसायात्मिका सांख्ये योगे या बुद्धिः सा समाधौ समाधीयतेऽस्मिन् पुरुषोपभोगाय सर्वमितिसमाधिरन्तःकरणं बुद्धिः। (शां.भा.)
- दूरेण ह्यवरं कर्म बुद्धियोगाद् धनञ्जय।[१५] बुद्धियोगात् समत्वबुद्धियुक्तात् कर्मणः। बुद्धौ योगविषयानां बुद्धौ, योगविषयानां बुद्धौ, तत्परिपाकजायां वा सांख्यबुद्धौ (शां.भा.)
- बुद्धियुक्तो जहातीह उभे सुकृतदुष्कृते[१६] बुद्धियुक्तः समत्वबुद्धियुक्तः (शां.भा.)
- कर्मजं बुद्धियुक्ता हि फल त्यक्त्वा मनीषिणः[१७]
- यदा ते मोहकलिलं बुद्धिर्व्यतिरिष्यति[१८] बुद्धिः योगानुष्ठानजनितसत्त्वशुद्धिजा बुद्धिः (शां.भा.)
- समाधावचला बुद्धिस्तदा योगमवाप्स्यति[१९] बुद्धि अन्तःकरणम् (शां.भा.)
- स्मृतिभ्रंशाद् बुद्धिनाशो बुद्धिनाशात्प्रणश्यति[२०] बुद्धेरन्तःकरणस्य बुद्धेर्नाशात्। (शां.भा.)
- प्रसन्नचेतसो ह्याशु बुद्धिः पर्यवतिष्ठते[२१] बुद्धिः रागद्वेषशून्योनिश्चयः। (शां.भा.)
- नास्ति बुद्धिरयुक्तस्य न चायुक्तस्य भावना[२२] बुद्धिः आत्मस्वरूपविषया (शां.भा.)
- ज्यायसी चेत्कर्मणस्ते मता बुद्धिर्जनार्दन[२३] बुद्धि सांख्यबुद्धिनिष्ठा, सांख्यशब्दित् परमार्थविषयबुद्धिः। (शां.भा.)
- व्यामिश्रेणेव वाक्येन बुद्धिं मोहयसीव मे[२४] बुद्धिशब्दो मतिपर्यायः (सर्वेषु भाष्येषु)
- न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम्[२५] बुद्धेर्भेदो, बुद्धिभेदो, बुद्धेर्भेदनं चालनं बुद्धिभेदः। (शां.भा.)
- मनसस्तु परा बुद्धिर्यो बुद्धेः परतस्तु सः[२६] बुद्धिर्निश्चयात्मिका तदर्थत्वान्मनसः। (शां.भा.)
- एवं बुद्धेः परं बुद्धवा संस्तभ्यात्मानमात्मना[२७]
- स बुद्धिमान् मनुष्येषु स युक्तः कृत्स्नकर्मकृत्[२८] बुद्धिमान् मनुष्येषु पण्डितो मनुष्येषु। (शां.भा.)

- कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि[२९]
- तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः[३०] यत् परं ज्ञानं प्रकाशितम्, तस्मिन्गताबुद्धिर्येषां ते तद्बुद्धयः। (शां.भा.)
- स्थिरबुद्धिसम्मूढो ब्रह्मविद् ब्रह्मणिस्थितः[३१] सर्वभूतेष्वेकः समो निर्दोष आत्मेतिस्थिरा निर्विचिकित्सा बुद्धिर्यस्य सः। (शां.भा.)
- यतेन्द्रियमनोबुद्धिर्मुनिर्मोक्षपरायणः[३२] यतानि संयतानीन्द्रियाणि मनोबुद्धश्च यस्य सः। (शां.भा.)
- साधुष्वपि च पापेषु समबुद्धिर्विशिष्यते[३३] कः? किं कर्म? इत्यव्यावृतबुद्धिः समबुद्धिः (शां.भा.)
- सुखमात्यन्तिकं यत्तद्बुद्धिग्राह्यमतीन्द्रियम्[३४] बुद्ध्यैवेन्द्रियनिरपेक्षया गृह्यत इति बुद्धिग्राह्यम्। (शां.भा.)
- शनैःशनैरूपरमेद् बुद्धया धृतिगृहीतया[३५] धृत्या धैर्येण गृहीतया, धैर्येण युक्त्याबुद्ध्येतित्यर्थः (शां.भा.)
- बुद्धिर्बुद्धिमतामस्मि तेजस्तेजस्विनामहम्[३६] बुद्धिर्विवेकशक्तिरन्तःकरणस्य बुद्धिमताविवेकशक्तिमतामस्मि। (शा.भा.)
- अव्यक्तं व्यक्तिमापन्नं मन्यन्ते मामबुद्धयः[३७] अबुद्धयोऽविवेकिनः (शां.भा.)
- बुद्धिर्ज्ञानसम्मोहः क्षमा सत्यं दमः शमः।[३८] बुद्धिरन्तःकरणस्य सूक्ष्मास्वार्थवबोधनसामर्थ्यम् तद्वन्तं बुद्धिमानिति हि वदन्ति। ज्ञानमात्मादिपदार्थनामवबोधः। (शां.भा.)
- ददामि बुद्धियोगं तं येन मामुपयान्ति ते।[३९] बुद्धिः सम्यग्दर्शनं मत्तत्वविषयं तेन योगो बुद्धियोगस्तम्। (शां.भा.)
- सान्नियम्येन्द्रियग्रामं सर्वत्र समबुद्धयः।[४०] समातुल्याबुद्धिर्येषामिष्टानिष्टप्राप्तौ ते समबुद्धयः। (शां.भा.)
- मय्येव मनः आधत्स्व मयि बुद्धिं निवेशय।[४१] बुद्धिमध्यवसायं कुर्वतीम्। (शां.भा.)
- मय्यर्पितमनोबुद्धिर्यो मद्भक्तः स मे प्रियः।[४२] संकल्पात्मकं मनोऽध्यवसायलक्षणा बुद्धिस्ते मय्येवार्पिते स्थापिते यस्य संन्यासिनः स मय्यर्पितमनोबुद्धिः। (शां.भा.)
- महाभूतान्यहङ्कारो बुद्धिरव्यक्तमेव च।[४३] बुद्धिरध्यवसायलक्षणा (शां.भा.)
- मम योनिर्महद्ब्रह्म तस्मिनन्गर्भं दधाम्यहम्[४४] महद्ब्रह्म-ममस्वभूता मदीया माया त्रिगुणात्मिका प्रकृतिर्योनिः सर्वभूतानां कारणं सर्वकार्येभ्योमहत्त्वात् कारणत्वाद् बृंहणाच्च स्वविकारणां महद्ब्रह्मेति योनिरेवावशिष्यते। तस्मिन् महद्ब्रह्मणि यौनोगर्भं हिरण्यगर्भस्यजन्मनोबीजं सर्वभूतकरणं बीजं दधानि निक्षिपानि। (शां.भा.)
- तासां ब्रह्म महद्योनिरहं बीजप्रदः बीजप्रदः पिता।[४५] ब्रह्ममहद्योनिः-ब्रह्ममहत् सर्वावस्थं योनिः कारणम् इत्यर्थः। (शां.भा.)
- एतद्बुद्धवा बुद्धिमान्स्यात्कृतकृत्यश्च भारत।[४६]
- एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः।[४७] अल्पबुद्धयः-विषयविषयाऽल्पैवबुद्धिर्येषां तेऽल्पबुद्धयः। (शां.भा.)
- पश्यत्यकृतबुद्धित्वान्न स पश्यति दुर्मतिः।[४८]

अकृत्बुद्धित्त्वात्- वेदान्ताचार्योपदशन्यायैरकृत्बुद्धित्त्वादसंस्कृतबुद्धित्त्वात्। योऽपि देहादिव्यतिरिक्तात्मवाद्यन्यमात्मानमेव केवलं कर्त्तारं पश्यति, असावप्यकृत् बुद्धिरेव (शां.भा.)

- यस्य नाहंकृतो भावो बुद्धिर्यस्य न लिप्यते।[४९] बुद्धिरन्तःकरणं यस्यात्मन् उपाधिभूता न लिप्यते नानुशायिनी भवति। ''इदमहममकार्षं तेन नरकं गमिष्यामि।'' इत्येव यस्य बुद्धिर्न लिप्यते (शां.भा.)
- बुद्धेर्भेदं धृतेश्चैव गुणतस्त्रिविधं शृणु।[५०] बुद्धिः सा पार्थ सात्त्विकी। बुद्धिः सा पार्थ राजसी। बुद्धिः सा पार्थ तामसी।[५१] तत्र ज्ञानं बुद्धेर्वृत्ति, बुद्धिस्तु वृत्तिमती। धृतिरपि वृत्तिविशेष एवं बुद्धेः। (शां.भा.)
- तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्।[५२] आत्मविषया आत्मालम्बना वा बुद्धिरात्मबुद्धिः (शां.भा.)
- असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः।[५३] असक्तबुद्धिः असक्तासङ्गरहिता बुद्धिरन्तःकरणं यस्य सोऽसक्तबुद्धिः (शां.भा.)
- बुद्ध्याविशुद्ध्या युक्तो धृत्यात्मानं नियम्यच।[५४] बुद्धयाविशुद्धयाऽध्यवसायात्मिकया माया रहितया च (शां.भा.)
- बुद्धियोगमुपाश्रित्य मच्चितः सततं भव।।[५५] बुद्धियोगं मयि समाहितबुद्धित्वं बुद्धियोगस्तं बुद्धियोगम् (शां.भा.)

तर्हि गीतायां बुद्धिपदस्य प्रयोगं पुनः पुनश्च अभवत्। विविधेषु अर्थेषु प्रयुक्तः। क्वचित्तु बुद्ध्यर्थं महद् इति पदस्य प्रयोगं कृतम्। यथा गीतायाः चतुदर्शे अध्याये। अनते च वक्तुं शक्यते यत् बुद्धिमहत्त्वकारणात् गीतायां बुद्धिरेव बुद्धिः प्रतिपादिता।

◆

## सन्दर्भाः


१. श्री दुर्गासप्तशती।
२. कठोपनिषद्।
३. सांख्यकारिका।
४. सांख्यतत्त्वकौमुदी, पृ. ९६।
५. वेदान्तसार।
६. सांख्यतत्त्वकौमुदी, पृ. ९७।
७. न्यायसूत्र, १/१/९।
८. पञ्चदशी, ७/१०१।
९. ब्रह्मवैवर्त पुराण, प्रकृतिखण्ड, अध्याय २३।
१०. महाभारते (आश्वमेधिको पर्वः)।
११. महाभारते (मोक्षधर्मः)।
१२. अमरकोष १/५/१।
१३. श्रीमद्भगवद्गीता २/३९।
१४. श्रीमद्भगवद्गीता २/४४।
१५. श्रीमद्भगवद्गीता २/४५।
१६. श्रीमद्भगवद्गीता २/५०।
१७. श्रीमद्भगवद्गीता २/५१।
१८. श्रीमद्भगवद्गीता २/५२।
१९. श्रीमद्भगवद्गीता २/५३।
२०. श्रीमद्भगवद्गीता २/६३।
२१. श्रीमद्भगवद्गीता २/६५।
२२. श्रीमद्भगवद्गीता २/६६।
२३. श्रीमद्भगवद्गीता ३/१।
२४. श्रीमद्भगवद्गीता ३/२।
२५. श्रीमद्भगवद्गीता ३/२६।
२६. श्रीमद्भगवद्गीता ३/४२।
२७. श्रीमद्भगवद्गीता ३/४३।
२८. श्रीमद्भगवद्गीता ४/१८।
२९. श्रीमद्भगवद्गीता ५/११।
३०. श्रीमद्भगवद्गीता ५/१७।
३१. श्रीमद्भगवद्गीता ५/२०।
३२. श्रीमद्भगवद्गीता ५/२८।
३३. श्रीमद्भगवद्गीता ६/९।
३४. श्रीमद्भगवद्गीता ६/२१।
३५. श्रीमद्भगवद्गीता ६/२५।
३६. श्रीमद्भगवद्गीता ७/१०।
३७. श्रीमद्भगवद्गीता ७/२४।
३८. श्रीमद्भगवद्गीता १०/४।
३९. श्रीमद्भगवद्गीता १०/१०।
४०. श्रीमद्भगवद्गीता १२/४।
४१. श्रीमद्भगवद्गीता १२/८।
४२. श्रीमद्भगवद्गीता १२/१४।
४३. श्रीमद्भगवद्गीता १३/५।
४४. श्रीमद्भगवद्गीता १४/३।
४५. श्रीमद्भगवद्गीता १४/४।
४६. श्रीमद्भगवद्गीता १५/२०।
४७. श्रीमद्भगवद्गीता १६/९।
४८. श्रीमद्भगवद्गीता १८/६।
४९. श्रीमद्भगवद्गीता १८/१७।
५०. श्रीमद्भगवद्गीता १८/२९।
५१. श्रीमद्भगवद्गीता १८/३०, ३१, ३२।
५२. श्रीमद्भगवद्गीता १८/३७।
५३. श्रीमद्भगवद्गीता १८/४९।
५४. श्रीमद्भगवद्गीता १८/५१।
५५. श्रीमद्भगवद्गीता १८/५७।


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 110-112

# भगवतः श्रीरामस्य नीतिमत्ता

डॉ. उमेश त्रिपाठी*

**राम त्वं परमात्मसि सच्चिदानन्द विग्रहः।**
**इदानी त्वां रघु श्रेष्ठ प्रणमामि मुहुर्मु हुः।।**

धर्मप्राणोऽयं भारतदेशः, तत्र श्रीराम, साक्षात् धर्मस्वरूपः। अतएव वाल्मीकिरामायणे मारीचो रावणमुपदिशन् ब्रूते–'मातुः कैकेय्याः पितुः दशरथस्य च प्रियकामार्थं राज्यं सुखभोगाश्च परित्यज्य श्रीरामो दण्डकारण्यं समागतोऽस्ति। स रामः कर्कशः, अविद्वान्, अजितेन्द्रियः, अनृतभाषी च नास्ति।

'रामो विग्रहवान् धर्मः' इति वाल्मीकि वचनेन पुरा भारते धर्मप्रधाना राज्ञां नीतिर्भवति स्म। अनुपदं धर्मनीत्या प्रजानुरञ्जनेन रामो रघुवंशकुले राजतिलक इवाऽभवत्। वाल्मीकि रामायणे हि तदानी राजतन्त्रं भवन्नपि रघुवंशिनां राज्ये लोकतन्त्रमक्षुण्णमभवत्। अनेनैव कारणेन राज्ञा दशरथेन रामाय यौवराज्य दानाय जनस्वीकृतिरपेक्षिताऽभवत्। स च नानृतवादी विद्वान् सन्नपि स्वतो वृद्धानां प्रतिपूजक आसीत्। तस्य प्रजासु स्वाभाविकोऽनुरागः, अतः प्रजापि रामे अनुरक्ता अभवत्। तद्यथा-

**निवास वृक्षः साधूनामापन्नानां परा गतिः।**
**आर्तानां संश्रयश्चैव यशसश्चैकभाजनम्।।** *(वाल्मीकि रामायणे ४.१५)*
**न चानृत कथो विद्वान् वृद्धाना प्रतिपूजकः।**[१]
**अनुरक्तः प्रजाभिश्च प्रजाश्चानुरज्यते।।**[२] इति।।

रामस्यावलोकनेन स लोके पुरुषसाराज्ञ एकः साधुरिवाजायत-

**अरोगस्तरुणो वाग्मी वपुष्मान् देशकालवित्।**
**लोके पुरुषसाराज्ञः साधुरेको विनिर्मितः।।**[३] इत्युक्तम्।

शीलसदाचारमहापुरुषगुणैर्युक्तं अपृधृष्य पराक्रमे रामे महान् राजोत्तमान् गुणौघान् पूरिते सति राजा दशरथः स्वजीवित एव तं यौवराज्यमैच्छत्। रामविशिष्टगुणान्निरीक्ष्य राज्ञा स्वतोऽपि योग्य राजानं रामं ज्ञातम्। एवं मनसि निश्चित्य राजसभायां सभासद् भिरेतन्निवेदितम्। तेऽपि रामस्य ज्येष्ठत्वात् सर्वगुणैरूपेतत्वाच्च रामस्य यौवराज्यं समर्थयामासुः। किञ्च तदा राज्ञा परीक्षणाय कथितमपि-यदि भो! मयि धर्मेण पृथिवीमनुशासति अपि रामस्य राज्यत्वं भवद्भिरिष्टं भवद्भिरिष्टं तर्हि किमत्रकारणम्? तैरुक्तम्-

**ते तमूचुर्महात्मानः पौरजानपदैः सह।**
**बहवो नृ-कल्याणगुणाः सन्ति सुतस्य ते।।** *इति सभासदैः परस्परं भृशं*

---

* पाण्डेयपुर, वाराणसी.

समीक्ष्य पुनरुक्तम्—

**न देवदेवोपममात्मजं ते**
**सर्वस्य लोकस्य हिते निविष्टम्।**
**हिताय नः क्षिप्तमुदारजुष्टं**
**मुदाभिषेक्तुं वरद त्वमर्हसि।।**[४] इत्यादि।

वाल्मीकिरामायणेन सूच्यते यद् मन्त्रिणस्त एव भवितव्या ये पौराणा जानपदानाञ्चातीवेणांविश्वासभाजनानि स्युः। अतो दशरथेन सहितो रामोऽपि तथैवाचचार। किञ्चोक्तं महाभारतेऽपि-

**तस्मै मन्त्रः प्रयोक्तव्यो दण्डमाधित्सता सदा।**
**पौरजानपदा यस्मिन् विश्वासो धर्मतो गता।।**[५] इति।

रामराज्यसभायां सर्वजातीया मुख्यतमा जनाः सभासदा भवन्ति स्म, शुक्रनीतावपि 'सभ्याः सर्वासु जातिषु इत्युक्तम्। अत उक्तं पुरा मनुनापि—

**जातिजानपदान् धर्मान् श्रेणीधर्मांश्च धर्मवित्।**
**समीक्ष्य कुलधर्मांश्च स्वधर्मं प्रतिपादयेत्।।**[६] इति।

मनुस्मृतेरनुशासनानुसारो रामो जातिधर्मान्, देशधर्मान्, श्रेणिधर्मान्, कुलधर्मांश्च जानाति पालयति स्म। भारतीयराजनीतौ राजधर्मे च राज्ञ आचरणमेवादर्शराज्यस्याधारः। राजा व्यक्तिर्दलो वास्यान्नाम। स स्वाचरणेन समाजस्योन्नायको भवति। अतो रामेण स्वाचरणेनैव प्रजां राज्यञ्चादर्शरूपेण निर्मापितम्। यद्यपि वैयक्तिकाचरणं वैयक्तिकस्वजीवनेनैव सम्बद्धम्, परं वस्तुतस्तु रामस्य वैयक्तिकमपि जीवनं प्रजाजनाय राज्यायैवासीत्। रामेण भ्रातुः कृते मातुः पितुश्च कल्याणार्थं राज्यत्यागः कृतः वनवासश्च स्वीकृतः, प्रजानां च हिताय स्वपत्नीत्यागः कृतः—

**स्नेहं दयां च सौख्यं च यदि वा जानकीमपि।**
**आराधनाय लोकस्य मुञ्चतो नास्ति मे व्यथा।।**[७] इति।

अद्भुतं खलु चरित्रं श्रीरामचन्द्रस्य यो मनुष्यो भूत्वा गिरिजनैः आदिवासिभिश्च मैत्री विदधत् समाजे उपेक्षितान् जनान् स्वकुटुम्बसदस्यसमानमानान् कुर्वन् पशुपक्षिणां वानरभालूकादीनां साहय्येन राक्षसचरितान् निहत्य तपोनिधीनाम् ऋषीणां मुनीनां च जीवनं निरुपद्रवं चकार। लंका-प्रवेश सन्दर्भे श्रीरामचन्द्रेण समुद्रे बद्धः सेतुः न केवल समुद्रसन्तरण हेतुः अपि तु द्वयोः देशयोः द्वयोः संस्कृत्यो, द्वयो दर्शनस्रोतसोः रामेश्वरयोः व्यतिकरकारकः राष्ट्रैक्याधायकश्च।

एवं रामायणे प्रतिप्रसङ्गेषु रामस्य नीतिनिपुणत्वं दृश्यते। यतो हि रामोऽऽदर्शराजा, रामस्य नीतिनिपुणत्वं सुधीभिरुदाहरणीयं भवति, विषयोऽयं नूनं विशिष्टं वैशिष्ट्ये मादधाति।

वाल्मीकेर्हार्दविधायैव रामचरितमानसे रामस्य नीतिविये विविधानि पद्यानि प्राप्यन्ते।

यथा-

**तुलसी प्रजा सुभागते भूपभानुसम होय।**
**बरसत हरषत लोग सब करषत लखै न कोय।।**
**नीति प्रीति परमारथ स्वारथ।**

**कोऊ न राम सम जान यथारथ।।** इत्यादयः।

रघुवंशेऽपि रामकुलस्य रामस्य च नीतेः वैशिष्ट्यं सर्वत्र परिप्लुतमेव।

**नृपस्य वर्णाश्रमपालनं यत् स एव धर्मो मनुना प्रणीतः।**
**निर्वासिताप्येवमतस्त्वयाहं तपस्विसामान्य मवेक्षणीया।।** *रघुवंश १४/६७.*

आदर्शीभूतं रामचरितामाचरणीयं, संकल्पोऽपि कश्चित् आस्थेयः–रामादिवद् वर्तितव्यं न रावणादिवत्' इति।

◆

**सन्दर्भाः**


१. वाल्मीकि रामायण. २/१/१४.
२. वाल्मीकि रामायण. २/१/१८.
३. महाभारतम् १२/८३/४५-५४.
४. वाल्मीकि रामायण. ३/२/४८-५४.
५. मनुस्मृति - ८/४६.
६. उत्तररामायण च. १/१२.


◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 113-114

काव्यम्

# श्रीर्जायतां सुस्थिरा

प्रो. रेवाप्रसाद द्विवेदी*

मोदी परं हि परमेश्वरति प्रबोधं
तच्छासनेऽप्रतनु वैभवमुन्नयामः।

आशावतां प्रवर एष महामनीषी
वित्तस्य शक्तिमुपगच्छति भूतशुद्ध्यै।

शिक्षायाः परमं फलं विनय इत्युच्चैः प्रबोधोच्छ्रिता
विद्वांसः कृतिनो वदन्ति, तदिदं नम्रत्वतो गम्यते।
नम्रत्वेऽत्रभवान् महानहमणुः पाणिद्वये मूर्धनि
कापोतीकलनेन बोध्यत इहाहङ्कारलेशोऽपिनो।।

इत्येषा खलु भारतीयगुरुभिः शिक्षा विनेयालिके
प्रीत्या धीयत आदिमात् तु दिवसात् सा कुत्र पश्चात्तने।
ये पाश्चात्त्यकुलागता भरतभूपृष्ठे युवानः कथं
तेषामेव करेषु धीयत इहाभारः समः शिक्षणे।।

यत्पार्श्वे न वराटिकापि विकलाङ्गी तस्य शिक्षा क्व वा
काश्यां संप्रति भाविनीति तु कथा कुत्रार्थिके दुर्युगे।
शिक्षायां भगवत्समर्थनमतः प्रातिष्ठते तार्किकं
तस्य क्वास्ति गतिर्यदि क्वचिदपि ग्रन्थाः पुराणाः न चेत्।।

* आई.टी.आई. करौंदी, वाराणसी.

यावद् वर्षति वारि वारिदघटा भूमीतले, किंशुकाः
प्रोद्यन्नूतनकोरकाः कनकितं कुर्वन्ति यावन्नभः।
यावत् संस्कृतभारती परतमां विद्यां निधत्तेऽपरां
यद्वत् तावदियं नरेन्द्रविजयश्रीर्जायतां सुस्थिरा।।

*–नमोनिर्वाचनम् (मोदीविजयपञ्चशती)*

◆

वाकोवाक्यम्
अन्ताराष्ट्रिय-संस्कृत-शोध-पत्रिका

ISSN : 0976-9455
VĀKOVĀKYAM
AN INTERNATIONAL SANSKRIT RESEARCH JOURNAL
Volume: X-XI, Issue: I & II, Oct. - Sept., 2017, pages : 115-118

**ग्रन्थसमीक्षा**

# संवाद-संविद्-समीक्षा

**ग्रंथनाम** : संवादसंविद्
**लेखक** : डॉ. पवनकुमार शास्त्री
**प्रकाशक** : सूर्या प्रकाशनम्, के. ५६/२९, औसानगंज, वाराणसी-२२१००१
**मूल्यम्** : रु. सहस्र मात्रम्।
**समीक्षक : डॉ. प्रभुनाथ द्विवेदी***

जनानां परस्परं मिथो वा सम्भाषो वाग्व्यवहारो वा संवाद इति। लोकेऽथ साहित्येऽयं शब्दोऽतिव्यापकः। मन्ये, सङ्केतसंवाद इङ्गितसंवादोऽत्र सृष्टेरादौ तदनन्तरं वाक्संवादो लोकमारुह्य सम्बन्धस्थापनसहकारित्वमभजत। संवादो मनः संवेगानां मनोभावानामभिव्यक्तेः प्रथमं साधनम्। 'यत्र तत्र जीवस्तत्र तत्र संवाद' इति व्याप्तिरपि नानुचिता। इयं व्याप्तिः साहित्यिकी न तु तार्किकी। यथा लोके तथैव साहित्येऽपि संवादः कृतपदः। देवस्य काव्ये वेदे संवादसूक्तानि निसर्गमनोहराणि। 'संवादमिमश्रौषमद्भुतं लोमहर्षणमि'तीयं संवादपरम्पराऽधुनापि विश्रान्तिं न लभते।

रूपकं नाम दृश्यकाव्यं तत्त्वतः संवादमयतां विभर्ति। वस्तुतः संवादविग्रहो रूपकमिति। एतदेवं वक्तुं शक्यते यद् रूपकस्य संवादस्य चाविनाभावसम्बन्धः। यतो हि संवादैर्विना रूपकं घटितुमेव नार्हति। अन्यास्वपि काव्यविधासु संवादा घटन्ते किन्तु रूपकस्य कथैवान्या।

संवादो वाचिकाभिनयान्तर्गत एव। यतो हि वाक्सम्बद्धोऽभिनयो वाचिक अभिनयः। आचार्यभरतो नाट्यशास्त्रे (१४.३-४) वाचिकाभिनयस्य स्वरूपं प्रस्तौति—

**वाचि यत्नस्तु कर्तव्यो नाट्यस्येयं तनुः स्मृता।**
**अङ्गनेपथ्यसत्त्वानि वाक्यार्थं व्यञ्जयन्ति हि।।**
**वाङ्मयानीह शास्त्राणि वाङ्निष्ठानि तथैव च।**
**तस्माद् वाचः परं नास्ति वाग् हि सर्वस्य कारणम्।।**

अभिनेतृजनैः स्वोच्चारणावयवैः पाठ्यस्य रङ्गेऽभिव्यक्तीकरणमेव वाचिकाभिनयः। इदमभिनयदर्पणे त्वेवमुक्तम्- "वाचा विरचितः काव्यनाटकादिस्तु वाचिकः।" एवं काव्यनाट्ययोरखिलं शब्दात्मकं रूपं वाचिकाभिनयोपेतम्। अस्य वाचिकाभिनयस्य द्वादश भेदा नाट्यशास्त्रे प्रसिद्धास्तत्राऽऽलापसंलापाविति द्वौ भेदौ संवादनिष्ठौ स्तः। अभिनयसंयोजने संवादानां परमं महत्त्वम्। संवादस्यापि नैके भेदाः।

---

* पूर्व आचार्य, संस्कृत विभाग, महात्मा गांधी काशी विद्यापीठ, वाराणसी-२२१००२.

संविन्नाम चैतन्यम्। नाट्यप्रयोगकाले सहृदयसामाजिकानां रसास्वादकारिणी या रसे विश्रान्तिं लभमाना चेतना सैव संविदित्युच्यते। इयं संवादसंविदपि तद्रूपा।

विविधविद्याविज्ञो नानाभाषभिज्ञः साहित्यसङ्गीतकलाकोविदो गहनगोष्ठीरसगरिष्ठो वचोवरिष्ठः सततसत्संवादाभ्याससुधीः डॉ. पवनकुमारशास्त्रिमहोदयस्तत्र संस्कृतनाट्यसाहित्यस्य कविकीर्तिधराणां भासकालिदासभवभूतिभट्टनारायणविशाखदत्तप्रभृतिप्रयोगविज्ञानकुशलानां नाट्यानि निपुणं निरीक्ष्य ततोऽभीष्टसंवादचयनपुरस्सरमेकं 'संवादसंविदि' ति ग्रन्थरत्नं सहृदयानां मनःप्रीतये प्रकटितवान्। यथा पुष्पोद्याने विविधवर्णगन्धयुतानि चेतःप्रसादनपराणि नानाकुसुमानि दृष्टिपथपतितानि हृदयमावर्जयन्ति तथैवास्मिन् ग्रन्थे सन्निहिता संवादसुमनोमालापि नयनगोचरीभूता सहृदयानां चेतांसि रञ्जयति। संवादस्य यावन्तः प्रकाराः, वचोविन्यासविदग्धैरङ्गीकृताः तेषां समेषां वर्गीकरणं विधाय विधिवदुदाहरणरूपेणात्र सन्निविष्टाः। संवादभेदानधिकृत्य तेषां निदर्शनार्थं ते-ते संवादाः मूलग्रन्थेभ्यः समुद्धृत्य यथाक्रमं ग्रन्थेऽस्मिन् समुपस्थापिताः। सावधानतया सन्दर्शितानां संवादानां प्रकाररूपतामभिधाय सन्दर्भोचितमाशयमपि विशदीकृत्य स्वाभिमतं टिप्पणमपि समुट्टङ्कितम्। अनयैव रीत्याऽत्र ग्रन्थे संवादानुद्धृत्योद्धृत्य तेषां निपुणं विश्लेषणं विधाय डॉ. शास्त्रिमहाभागः तद्वैशिष्ट्यप्रदर्शनपूर्वकं तत्त्वान्वेषणमपि विधत्ते।

अत्र कानिचित् स्थलानि निदर्शनार्थं प्रस्तूयन्ते। तत्रैकः प्रसङ्गः विक्रमोर्वशीयस्य प्रथमेऽङ्के दृश्यते। डॉ. शास्त्रिमहोदय इमं संवादं, 'प्रिय मुखस्य पुनर्पुनर्दर्शनार्थमसत्याभिनयमि'त्युपशीर्षकेण सह योजयते। सः कथयति- ''प्रियमुखदर्शनेन जनितोऽनुरागः प्रणयिन्या हृदि तस्य प्रियतमस्य पुनर्पुनर्दर्शनेच्छां जनयति, एतदर्थं सा कदाचिदसत्याभिनयमपि करोति।'' यथा—

**उर्वशी** - (उत्पतनभङ्गं रूपयित्वा) अहो! लताविटपे एकावली वैजयन्तिका मे लग्ना। (सव्याजं परिवृत्य राजानं पश्यन्ती) चित्रलेखे! मोचय तावदेनम्।

**चित्रलेखा** - (सस्मितम्) दृढं खलु लग्ना। दुर्मोचनीयेव मम प्रतिभाति। भवतु, यतिष्ये तावत्।

**उर्वशी** - (स्मितं कृत्वा) सखि! स्मर, तावदेतदात्मनो वचनम्। (विक्रमो., १/३०)।

अत्र संवादमिमुद्धृत्य डॉ. शास्त्रिमहोदयो विमृशति - 'अत्रोर्वश्याः सव्याजविलम्बनेन चित्तासङ्गाभिधा द्वितीया स्मरावस्था सूचिता। यथा चोक्तं रतिविलासेऽनुरागेङ्गितमधिकृत्य- ''विलम्बस्तु पथि व्याजात्परावृत्त्यापि दर्शनमि''ति। महाकविना कालिदासेन शाकुन्तलेऽपि एवंविधः प्रसङ्गः समायोजितोऽस्ति।' यथा-

**शकुन्तला** - (गतिरोधं रूपयित्वा) हा धिक् हा धिक् उरूस्तम्भविह्वलाऽस्मि संवृत्ता। ...हला अनसूये! अभिनवकुशसूचिपरिक्षतं मे चरणम्, कुरबकशाखापरिलग्नञ्च वल्कलम्। तावत् परिपालयतं माम्, यावदेनं मोचयामि। (शाकु. १.७८-७९)

अस्मिन् स्थाने डॉ. शास्त्रिणा टिप्पणी योजिता—

'अत्र विक्रमोर्वशीयादधिका प्रभावशालिनी शब्दसंरचना दृश्यते। 'उरूस्तम्भमि'ति पदं न केवलं स्वाभाविकं प्रतीयते अपितु कामविवर्द्धकमप्यस्ति। अनेनैव प्रकारेण परिक्षतेन चरणेन शीघ्रगमनमशक्यमिति स्वाभाविकः प्रभावशाली च तर्कः शकुन्तलाया मनोभावं दृढतयाऽनुगोपयति। अतः कुरबकशाखापरिलग्नं वल्कलं शकुन्तला स्वयं मोचयति। अनेन तस्याः रहस्यं रहस्यमेव तिष्ठति। अत्र मुग्धनायिकायाश्छलेन

नायकदर्शनमित्यवधेयम्। यदुक्तं कामसूत्रे- 'दूरे स्थिता पश्यतु मामिति मन्यमाना परिजनं समदनविकारमाभाषते' इति। अनेन प्रकारेण शाकुन्तलीयस्य संवादस्य श्रेष्ठत्वं प्रतिपादितं भवति।' (पृ. २५-२६)।

अस्मिन्नेव ग्रन्थेऽन्यत्र (पृ. १०९-११०) 'प्रियतमपक्षत: प्रणयप्रस्ताव:' इत्युपशीर्षकान्तर्गते निबद्ध: प्रथम: संवाद: सविशेषं द्रष्टव्य:—

(...तत्र च प्रथमत: मालविकाग्निमित्रस्थ: दूतीमुखेनोपस्थापित: प्रणयप्रस्ताव: प्रस्तूयते—)

**मालविका** - प्रिया खल्वहं तव।

**बकुलावालिका** - न केवलं मम...गुणेष्वभिनिवेशिनो भर्तुरपि।

**मालविका** - अलीकं मन्त्रयसे। एतदेव मयि नास्ति।

**बकुलावालिका** - सत्यं त्वयि नास्ति। भर्तु: कृशेषु सुन्दरपाण्डुरेषु दृढयतेऽङ्गेषु। अनुरागोऽनुरागेन परीक्षतव्य इति सुजनवचनं प्रमाणीकुरु।

**मालविका** - किमात्मनश्छन्देन मन्त्रयसि?

**बकुलावालिका** - नहि, नहि, भर्तु: खल्वेतानि प्रणयमृदुलान्यक्षराणि वक्त्रान्तरितानि।

**मालविका** - सखि! देवीं चिन्तयित्वा न मे हृदयं विश्वसिति।

**बकुलावालिका** - मुग्धे! भ्रमरसंपातो भविष्यतीति वसन्तावतारसर्वस्वं किं न चूतप्रसवोऽवतंसितव्य:?

**मालविका** - त्वं तावद् दुर्जाते गच्छत: सहायिनी भव।

**बकुलावालिका** - विमर्दसुरभिर्बकुलावलिका खल्वहम्। (मालविका. ३/११३-११५)

अस्मिन् संवादप्रसङ्गे डॉ. पवनकुमारशास्त्रिमहाभाग: स्वकीयांटिप्पणीं योजयति- 'अत्र राजा अग्निमित्र: निजप्रेयस्या: मालविकाया: सम्मुखे बकुलावलिकामुखेन (दूतीमुखेन) आत्मन: प्रणयप्रस्तावमुपस्थापयति। दूत्य: न खलुकेवलं सन्देशं संवहन्ति अपितु ता उभयो: पक्षयो: सम्मेलनार्थं सहायतामपि कुर्वन्ति। प्रसङ्गेऽस्मिन् बकुलावलिकया भणितं प्रस्तावववाक्यं चित्ताकर्षकमस्ति। 'गुणेष्वभिनिवेशिनो' इति विशेषणपदमाश्वस्तिदायकमस्ति। 'सत्यं त्वयि नास्ति। भर्त्तु: कृशेषु सुन्दरपाण्डुरेषु दृढयतेऽङ्गेषु।' इत्यत्र विपरीतलक्षणया त्वयि सन्ति गुणा इत्यर्थ:। त्वयि यदिगुणा नाभविष्यन् तर्हि किमिति त्वद्विषयकानुरागजनितखेदैरात्मानं पीडयित्वा राजा कृशपाण्डुगात्रोऽजायत इति भाव: श्रोतृजनानाह्लादयति। अपिच, संवादस्यास्य अन्तिमं वाक्यं रमणीयतरं प्रभावं जनयति। 'विमर्दसुरभिर्बकुलावलिका' इत्यत्र विमर्दसुरभि: घर्षणेन, सुरभिविशेषसौरभशालिनी बकुलश्रेणीत्यर्थ:। स्वभावसुरभिरपि यथा विमर्दनेऽधिकं सौरभपावहति तथाऽहमपि स्वभावचतुरा विपद्दर्शने धैर्यावलम्बेन विशेषविवेकप्रकाशिनीति ते श्रेयमिति भाव:। अत्र श्रोतु: भावज्ञानानन्तरमात्मन: प्रस्तावकथनं तथा च तेन श्रोत्रा प्रत्याख्याने उपयुक्तोत्तरदानेन तस्य वशीकरणं (स्वमतानुवर्तीकरणमि) ति द्वौ वाग्व्यवहारौ चिन्तनीयौ स्त:। इदमेवात्र वैशिष्ट्यम्।'

एवमेव 'संवादसंविद्' इति नाम्नि ग्रन्थे पूर्वोल्लिखितानां महाकवीनां रूपकेभ्य: समुद्धृत्य बहव: संवादा यथारुचि विविधशीर्षकेषु संकलिता अत्र स्वाभिमतटिप्पण्यादिभि: संयोजिता:। एष अध्यवासायो डॉ. पवनकुमार शास्त्रिण: श्लाघ्य:। अपारे खलु नाट्यसंसारे नूनमेवापरिमिता संवादसरणि:।

असम्भवं नाम तत्र समग्रसंवादपर्यालोचनम्। अतएव डॉ. शास्त्रिमहाभागेन यत्कृतं तदपि बहुमन्तव्यम्। अस्मिन् कर्मणि संवादसंसारं प्रति मन:कुतूहलमथ च बुद्धिबन्धुत्वमेव कारणम्। ग्रन्थे संवादानुद्धृत्य ताँश्चाधिकृत्य

यो विमर्शो विहितो यश्चध्वनिरुत्प्रेक्षितो निष्कर्षश्चापि यः प्रतिपादितः सवस्तुगाम्भीर्यमालोच्य शास्त्रचिन्तितपरिणाम एव। ग्रन्थे ये संवादनिचयास्ते न केवलं मनोविनोदाय, अपितु तत्पात्राणां मनोभावपरीक्षणाय तेषां च विश्लेषणाय। संवादे भवति साहित्यं, तत्तत्त्वोन्मीलनमपि यथावसरं शास्त्रिमहोदयेन साधु कृतम्। संवादसौष्ठवं सूचितुं, संवादसौहित्यसौगन्धसौभाग्यं सर्वेभ्यः संवादरसाकृष्टमानसेभ्यः सुधीजनेभ्यः प्रदातुमेवैष प्रयत्नः शास्त्रिमहाशयस्य, यतो वयं सर्वे संवादसंसार जीवामः। केचन संवादा तथाभूता लोकप्रिया जायन्ते यत्ते जनानां जिह्वाग्रे तिष्ठन्ति। यथा- ''कस्तावदुष्णोदकेन नवमालिकां सिञ्चति?'' अथ वा, ''वत्से! दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता। सुशिष्यपरिदत्तेव विद्या अशोचनीयासि मे संवृत्ता।'' सूक्तिरूपाः संवादास्तु परमाह्लादका भवन्ति। एतादृशाः सर्वप्रकारकाः संवादा अस्मिन् ग्रन्थे सन्निहितास्सन्ति। अतः शोधपरः परमोपकारकोऽयं ग्रन्थः 'संवादसंविद्' इति साहित्यानुरागिभिः सङ्ग्राह्यः। अन्ततश्च,

**उद्धृत्योद्धृत्य संवादान् रूपकेभ्यो मनोहरान्।**
**वैशिष्ट्यं वर्णितं तेषां ग्रन्थे पवनशास्त्रिणा।।**
**संवादसंविदेषा या टिप्पणीभिः प्रसाधिता।**
**मुक्ताफलोज्ज्वला भाति रूपकाब्धितरङ्गिणी।।**

**संवादसारः खलु वाक्प्रसारः।**
**संसार एवैष संवादचारः।**
**संवादभुवने रराजते का?**
**सैषाहि संवादसंविद् गभीरा।।**

◆

शोधोद्बोधविबोधनाय विदुषां तोषाय शोधार्थिनां
नूत्नाध्वप्रतिबोधनाय विविधज्ञानप्रकाशाय च।
स्वर्यातस्य पितुः स्मृतिप्रकरणे षाण्मासिकी पत्रिका
वाकोवाक्यमितिप्रशस्तविकसन्नाम्ना समुद्योतते।

Publication Year : 2017
Volume : X - XI
Issue : I - II (oct. - sept. 2017)

Institutional and Non-Institutional subscription information :
Price : Rs. 300.00 (Single issue)
USD 60 (Single issue)

Address : Flat # 3, Priya Apartment, Kamachha, Varanasi-221001, INDIA E-mail : vakovakyamjournal@gmail.com

Printer : DEE GEE Printers, B. 22/398, Khojwan Bazar, Varanasi-221010, INDIA